# सहस्रागमः

रात्र्यन्तकमथो वक्ष्ये शृणुष्वैवं जनार्दन
प्रत्यूषोर्ध्वे विधिस्नाप्य नाडिका लेखनं तथा १
सुस्नाप्य देशिकाद्येन तर्पणं च जपेऽथ वा
पादप्रक्षाळनं कृत्वा द्वाराग्रे रुचिरासनः २
करन्यासादिकं पूर्वं सामान्यार्घ्यमुपाश्रितम्
द्वारमस्त्रेन संप्रोक्ष्य द्वारपालान्प्रपूजयेत् ३
दिव्यदृष्टिनिपादेन दिव्यानुपरिवर्तिना
धूपं कुण्डमिति प्रोक्तं तदूर्ध्वे देवदक्षिणे ४
विशेषार्घ्यं प्रकल्प्याथ भूतशुध्यन्तर्यागताम्
संहिता मनसे भाव्य पूजिते लिङ्गमूर्धनि ५
निर्माल्यमीशदिग्भागे त्यजेच्चण्डनिवेदनम्
गड्डुक प्रोक्षणं चैव जलं तत्पूर्णपूरयेत् ६
अभ्यर्च्य संहिता मंत्रैः धनुमुद्रावकुण्ठयेत्
पंचमुद्रेण संयुक्तं धूपं कण्ठेन संमितम् ७
नन्द्यावर्तं श्रियावर्तं मन्दारं माधवी तथा
केतकी चम्पकोपेतं प्रोक्षयेदस्त्रमंत्रतः ८
संवत्सरमनुरूपे लिंगपीठे सदास्थितिः
अभिषिच्य महेशानं धौतवस्त्रेण संमितम् ९
आधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम्
आसनं मूर्तिपर्यन्तमष्टत्रिंशत्कलान्यसेत् १०
तद्देहं विन्यसेल्लिङ्गं तत्परं शिववाहनम्
स्थापनं संनिधानं च संनिरोधनमेव च ११
अवकुण्ठनं पंचैते पंच मुद्रां प्रदर्शयेत्

References:
Pages 1-172: *Sahasrāgama*—Manuscript Nos. T0033 and T0103 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry.
Pages 172-221: *Sahasrāgama Aṣṭabandhanavidhi*—Manuscript No. T0034a of the Muktabodha on-line digital library.
Pages 221-231: *Sahasratantra*—Excerpts from Manuscript No. T0162a of the Muktabodha on-line digital library.
Pages 231-240: *Sahasrāgama*—Excerpts from Manuscript No. T0918 of the Muktabodha on-line digital library.

संहितारूपवद्ध्यात्वा संहितामनुसंयुतम्  १२
तदूर्ध्वे सशिवं ध्यात्वा अनन्तादि शिखण्डयकम्
वामादि द्वारपालादीन् वज्रादीन्लोकपालकान्  १३
अभ्यर्च्य गन्धपुष्पाद्यैः सर्वरूपं मनःस्थितम्
बुद्ध्यहंकारदेवेष्वावृत्त्यैरर्चयेच्छिवम्  १४
भोगांगमर्चनं प्रोक्तं संहितालयमेव च
एकमूलं चतुःशृंगं षट्पत्रं बहुशाखयोः  १५
बीजं संपुटितन्मंत्रैः अर्चयेद्गन्धमाल्यकैः
आवृत्यादिषु सर्वेषु दापयेत्तु सदाशिवम्  १६
पञ्चावरणदेवेषु सर्वशून्यश्शिवो स्थितम्
ज्ञेयार्चनक्रमेणैव देशिकं मन्त्ररूपकम्  १७
त्रिविधं कर्ममिच्छन्ति त्रिविधं वर्जयेच्छिवम्
देशिकः शक्तिरित्याहुः देशिकात्मा शिवस्य तु  १८
आकाशे नृत्तवद्रूपं भ्रूमध्ये च कलेश्वरम्
नादान्तोच्चारणं मंत्रं पदाध्वादिमहामनुम्  १९
पतितं सर्वजन्तूनां भावयेल्लिंगमूर्धनि
आवाह्य वह्निदैवत्यं पंचमूर्तिकृतिस्सदा  २०
नैवेद्यं दधि शुण्ठी च उपदंशसहस्रकम्
क्षुद्रकन्दसमायुक्तं प्रभोर्ध्वे वा निवेदयेत्  २१
धूपदीपं परिभ्राम्य चैतन्यस्य निवेदितम्
पुष्पगन्धं मनोपेतं आलयं भूतभावनम्  २२
जीवलिंगसमायुक्तं भूतात्मा धूपदीपकम्
उपचाराणि सर्वेषां त्रिंशद्दिनमिति भवेत्  २३
सम्राज्य संपदं प्राप्य शिवसायुज्य भक्तवत्
सशिवब्राह्मणयेत्युक्तमन्यथा नृपनश्यति  २४
अळगा ब्रह्मसै पश्चात् स शिवब्राह्मणो विधिः
अन्यथा नृप नश्यन्ति परचक्राद्भयप्रदम्  २५
रात्र्यन्तकविधिप्रोक्तं नित्यपूजा विधीयते  २६

इति सहस्रतंत्रे क्रियापादे रात्र्यन्तक पूजाविधि पटलः  १

२

अथातः संप्रवक्ष्यामि शिवलिंगार्चनं परम्
ज्ञानं ज्ञातृसमुद्भूतं ज्ञेयमभ्यर्च्य तन्त्रवत् १
तन्त्रमन्त्रसमारूढं कर्म ज्ञेयं सदाशिवम्
षट्त्रिंशत्तत्वसंभूतं लिंगपीठादि सर्वशः २
नियमं रुद्रभेदेन योगज्ञानसमन्वितम्
शिवभेदं शिवं प्रोक्तं ज्ञेयं तत्वात्मनायके ३
क्रिया शरीरमित्युक्तं मंत्रो जीवमिति स्मृतम्
क्रियामंत्रप्रयोगो हि शिवसांनिध्यमाचरेत् ४
प्रातःकालोदयात्पूर्वे युग्मलेखननाडिका
आचम्य युग्मभस्मांगैर्मूलमंत्रेण संयुतम् ५
हृत्पुण्डरीकमध्यस्थे सुषुम्नेन पथालयम्
द्वादशान्तपदे योज्य तत्तेजः पिंगपिंगळैः ६
आधारादिरादिसुमध्यस्थं आनन्देशसमन्वितम्
सुस्तम्भदीपिका नाडी तन्मंत्रमध्यमस्थितम् ७
चिन्तयेन्मनसा भाव्य निराधारसमन्वितम्
यथेष्टं देशवद्गम्य ऐशान्यादिशिवर्जयेत् ८
उत्तरास्य प्रभो दक्षे रजनी संमुखस्थितम्
आचम्य पूर्ववत्सप्तमर्दनं मृदसंयुतम् ९
कारेण सप्तभिः शोध्य स्नानं कण्ठं च मूर्धनि
मंत्रस्नानं सुभस्मं च माहेन्द्रराढवान्मनुः १०
शुद्धवस्त्रेण मुन्मृज्य शुद्धवस्त्रोत्तरीयकैः
तपभ्रंशं च तत्काले संध्या वैदिकतर्पणम् ११
भस्म वामकरे स्थाप्य दक्षहस्तेऽभिमंत्रयेत्
भस्मं भवतु तद्रूपं आत्मवद्वह्निमेव च १२
संहितेन नमस्कृत्य तत्रैवमभिमंत्रितम्
मूर्ध्नि चैव ललाटे च हृदये गुह्यदेशके १३
जानुतां बाहु कण्ठे च प्रोक्षणं बहिरंगयुक्
प्राणायामविधिं भाव्ये शिवं साक्षान्महामनुम् १४

करन्यासविधिं भाव्यमंगीनां विन्यसेत्तथा
शिवगायत्रिमंत्रेण त्रिधादर्घ्यमनुः सह १५
संहिता शिववस्त्रं च त्रिधाचार्घ्यं समर्पणम्
संहितां च पुनः स्थाप्य शिवेन परया सदा १६
श्यामळं वावशुध्यर्थं तर्पयेद्गुरुपादुकम्
आलयं तु प्रदक्षिणयां क्षाळयेज्ञानुमूर्तिषु १७
आचम्य द्वारमाश्रित्य पूर्ववद्भस्म धारणम्
कलशेन सुसंप्रोक्ष्य निरीक्षणादि चतुष्टयम् १८
ब्रह्मविष्णुहरादीनां मूलमध्यममग्रके
वलये च त्रिधाभ्यर्च्य पूरयेद्धृदिगाळितम् १९
प्रणवे सप्तधा मन्त्रि धेनुमुद्रां प्रदर्शयेत्
द्वारमस्त्रेण संप्रोक्ष्य द्वारपालान्प्रपूजयेत् २०
गणपतित्रितयाभ्यर्च्य गंगां च यमुनां तथा
नन्दिनेन महाकाळमस्त्रं द्वारेण मर्चितम् २१
पुष्पक्षेपान्ततर्क्षेण भूमिष्ठां त्रिविधानिति
देवदक्षिणदिग्भागे संनिविष्टस्सुखासने २२
भूतशुध्यन्तरीकृत्वा पातशुद्धिसमन्वितः
क्षाळयेल्लिंगपीठं च अर्चयेद्धारिकांचितम् २३
आधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम्
शिवासनं मूर्तिहंसविद्यादेहं न्यसेच्छिवम् २४
शुद्धविद्यादिशक्त्यन्तं बुभुक्षो शुद्धिवर्त्मनि
शिवं परात्परतरं सूक्ष्मं नित्यं सर्वगमव्ययम् २५
अनन्तितमनौपम्यमप्रमेयमनामयम्
शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम् २६
व्योमातीतन्तु सूक्ष्मत्वात् नित्यं कारणशून्यतः
अहं शून्यं परं शून्यं सर्वशून्यं सदामनुम् २७
बिन्दुशून्यं पराशक्ति +++ मनस्य च
स्थूलं सूक्ष्मं विधं शून्यं नित्यं संहारकारणम् २८
शान्त्यतीतकलायुक्तं मन्त्राध्वा च पदादिषु

कामिकाद्यष्टविंशत्या तत्तन्मन्त्रसुसंयुतम्  २९
काष्ठे लोहे शिले हृद्ये षट्त्रिंशत्तत्वसंयुतम्
शिवविद्यात्मतत्वं च षड्ध्वमंत्र कलेश्वरम्  ३०
सहस्राक्षरमाद्यन्तं परादूर्ध्वे सदाशिवम्
निरांजननिराधारनिष्क्रियारूपवर्जितम्  ३१
सौवर्णं यत्क्रिया भिन्नं एतत्तु शिवलक्षणम्
अवर्णविग्रहं देवं वर्णविग्रहवर्जितम्  ३२
वर्णविग्रहवेत्तारं नमामि स्तौमि संश्रये
महतः प्राप्य तन्मंत्रं त्रिशिखामनुसंमितम्  ३३
आवाह्य देवं तत्रैव स्थापनं संनिधानके
रोधने पाद्यमाचम्य आसनं मूर्तिमूलिषु  ३४
स्थापितेन समभ्यर्च्य अवकुण्ठनमेव च
धेनुमुद्भवशूलं च नेत्रपद्मं च मुद्रया  ३५
पाद्यं पादाम्बुजद्वन्द्वे वक्त्रेष्वाचमनीयकम्
अष्टत्रिंशत्कलोपेतं विद्यादेहं पुनश्चितम्  ३६
संहिते गगने वक्त्रे बीजं शाखाप्रपञ्चकम्
अनन्तादिशिखण्ड्यन्तं वामादिनवशक्तयः  ३७
मण्डलत्रितयं पश्चात् धूपदीपादिभिश्शिवम्
गव्यपंचामृतोपेतं पदाध्वा वत्सरं मनु  ३८
अभिषिच्य विशेषार्घ्यं धौतवस्त्रेण वेष्टनम्
भूषणैर्गन्धपुष्पं च दूर्वाक्षतसमन्वितम्  ३९
पूर्ववद्ध्यानदेवेषु संहितालयमर्चितम्
पंचावरणमार्गेण मनसेन विभावयेत्  ४०
ज्ञानदीपात्मनो धूपं पंचेन्द्रियेण पत्रकम्
पुष्पदारिमनस्थं च आलयं भूतभावनम्  ४१
जीवलिंगसमायुक्तं प्राणादिधूपदीपकैः
इत्येवं भावयेत्सर्वं मंत्रजीवेन मुच्यते  ४२
संक्रमे विषुवे चैव ग्रहणे राजजन्मयुक्
संक्रमेषु कला प्रोक्तं विषुवे च शताष्टकम्  ४३

ग्रहणे नवकुम्भेषु स्नपने त्रिविधं भवेत्
गव्यपंचामृतोपेतं सुस्नाप्य मूलमौलिषु ४४
अभ्यर्च्य गन्धपुष्पाद्यैः निवेद्यं तु महाहविः
मुखवासं च ताम्बूलं तर्पणं छत्रसंयुतम् ४५
चण्डेश्वरं समभ्यर्च्य आचार्याय प्रदापयेत्
विशेषपूजाविधिः प्रोक्तं मासपूजाविधिं शृणु ४६
इति सहस्रतन्त्रे क्रियापादे विषुवायनसंग्रहपटलः २

५
अर्धयामविधिं वक्ष्ये शृणुष्वेवं जनार्दन
विशेषार्घ्यसमोपेतं भूतशुध्यन्तरीयताम् १
सौवर्णं राजतं ताम्रं पादुकं परमेश्वरम्
स्नापयेत्पादुकं प्रोक्तं संहितेन समन्वितम् २
स्थण्डिले तत्र गौरे वा वस्त्रेणैव समन्वितम्
पिण्डकोर्ध्वे त्रिपादूर्ध्वे स्नापयेत्तु विचक्षणः ३
केतकी जातिकल्हारै बिल्वपुष्पैश्च पार्श्वयुक्
कर्पूरकुंकुमारोच्यैः हिमसेचनचन्दनैः ४
तद्गन्धनिर्मितं लिंगं पादुकैस्सहलेपनम्
मूलबेरार्चनं पूर्वं वक्ष्यते तु जनार्दन ५
पूर्ववत्पूजयेद्विद्वान् चक्रान्तमर्चयेच्छिवम्
आसनं त्रितयं मंत्रैः संहितेन समन्वितम् ६
चैतन्यं वेद्यवेदेवा भावयेच्छिव सर्वशः
पादुकं पूजयेत्तत्र ज्ञेयं सर्वत्र भावितम् ७
क्रियते च महाभाव तद्भावज्ञेयसंयुतम्
आधाराख्यमनन्तं च आसनं चैव तत्पदम् ८
शुभविद्यादिशक्त्यन्त मूर्तिदेहं न्यसेन्मनुम्
पंचवक्त्रेषु मभ्यर्च्य पंचभूतादिदेवता ९
कलेश्वरसमोपेतं सृष्टि स्थित्यन्तकृत्यकम्
षट्त्रिंशत्तत्वसंयुक्तं पंच ब्रह्म सदाशिवम् १०

तदूर्ध्वे परया शक्त्या प्रणवात्मकमव्ययम्
शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम्  ११
व्योमातीतं तु सूक्ष्मत्वात् नित्यं कारणशून्यतः
स्थूलं सूक्ष्मविधिं शून्यं परं शून्यं परात्परम्  १२
आदिप्रासादशाखादिं मुच्यरेन्मुद्भवात्मनः
++ मध्ये गतं नृत्तं नृत्तमध्ये तु मूर्तये  १३
मूर्तिमध्ये गतं नृत्तं शान्त्यतीतं परात्परम्
पुष्पांजलिं गतं ध्यात्वा तत्पादाग्रे निवेदयेत्  १४
स्थापनं संनिधानं च संनिरोधनमेव च
अवकुण्ठन पंचैते उद्भवं मुद्रयान्वितम्  १५
पाद्यमाचमनं चार्घ्यं मौनमंत्रं निवेदयेत्
परहासहसंयुक्तं मंत्रपाशं च बन्धवत्  १६
आकारत्रयसंयुक्तं तत्र वत्पञ्च वक्त्रके
ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतकम्  १७
तस्मादादि चतुर्थ्यन्तं पाताळे भैरवं शिवम्
पंचभूतेषु रूपे च तत्तत्स्थाने न्यसेच्छिवम् १८
एक द्वि त्रि चतुर्थ्यञ्च पंचमं बहुशाखया
त्रिंशत्त्रिकोटिदेवानां ऋषीणां नागभूतयुक्  १९
स्थावरं जंगमं सर्वं दिवं वक्त्रं समुद्भवम्
उपचाराणि सर्वेषां मन्त्रमालं यथोचितम्  २०
क्रियाशक्तिसमोपेतं मण्डलत्रितयं न्यसेत्
अभ्यर्च्य गन्धपुष्पाद्यैः मनो धूपसमन्वितम्  २१
ज्ञानशक्ति समो दीपं पंचेन्द्रियेण पवित्रकम्
धूपदीपं च सर्वत्र भावयेत्परमं पदम्  २२
चैतन्यं वैद्यदेवाय हायनक्रममुच्यते
भूतोपचारमात्रेण गन्धपुष्पसमन्वितम्  २३
अपूपमिक्षुखण्डं च गुळखण्डैश्च पायसैः
फलैर्निवेदितं सर्वं मुखवाससमन्वितम् २४
ताम्बूलं दापयेत्पश्चात्पादुकाराधनं तथा

ब्राह्मणान्वेदघोषेण शंखदुन्दुभिसंयुतम् २५
गणिकाश्चतुर्दशी युक्तं द्वात्रिंशल्लक्षणैर्युतम्
द्वात्रिंशद्गणिकोपेतं पुष्पाक्षतसमन्वितम् २६
मातरश्चण्डिका सप्त वीरभद्री जटायनी
डिण्डिनी मुण्डिनी चैव भोगिनी योगिनी तथा २७
लक्ष्मी चतुर्दशी युक्तं खड्गखेटकधारिणम्
छत्रचामरपुष्पं च झषकं तालवृन्तके २८
गानयेत् श्रुतिवाद्यञ्च इन्द्रादि देवता दिशि
पदे पदे समागम्य भ्रामयेद्धोगिनीषु च २९
पाद्यमाचमनं चार्घ्यं धूपदीप समन्वितम्
आयुधं संग्रहेद्विद्वान् तत्कराग्रेषु दीपवत् ३०
पंचवक्त्रहविः प्रोक्तं लवणं निम्बपत्रवत्
भ्रामयेत्त्रिविधं कृत्वा गन्धकासुरनादयुक् ३१
ब्रह्मविष्णुहरो मंत्रैः तत्तद्भ्राम्यं विशेषतः
देशिकं संगृहेत्तत्र पादकं पद्ममुद्रया ३२
तदूर्ध्वे विन्यसेच्छंभू धूपदीपादिभिश्शिवम्
आधाराख्यमनन्तं च गौर्यासनसुसंयुतम् ३३
आसनं शुद्धविद्यान्तं तन्मूर्तिमीश्वरं तथा
शक्तीशः शक्तिकं व्याप्तं व्यापकं परमेश्वरम् ३४
भोगं योगं च वीरं च शक्तिरेवं त्रिधा भवेत्
वामादिनवशक्तिञ्च अर्चयेन्मण्डलत्रयम् ३५
अम्बिका च गणाम्बी च गंगा गौरी उमा तथा
अभ्यर्च्य गन्धपुष्पाद्यैः धूपदीपादिसंयुतम् ३६
अपूपमिक्षुतोयं च पायसेन समन्वितम्
नाळिकेरफलोपेतं ताम्बूलं मुखवासकम् ३७
दापयेद्धूपदीपं च स्तोत्रैर्वा सुजपं तथा
अर्केन्दुतारकं यावत् सह विघ्नेश्वरादिभिः ३८
मन्दिरे तु महादेवं स्थापनं स्वेच्छयान्वितम्
कवाटबन्धनं कृत्वा पंचसप्तत्रिनाडिका ३९

क्षेत्रपालार्चनं कृत्वा आधाराख्यमनन्तकम्
अभ्यर्च्य गन्धपुष्पाद्यैः असितांगानि पूजयेत् ४०
खड्गखेटकहस्तं च भावयेदष्टभैरवम्
डमरुं पाशफालां च त्रिशूलं ज्वलितं शिरः ४१
किंकिणी मुण्डमाल्येन त्रिणेत्रं भीमविग्रहम्
श्वानमासनदेवेशं भैरवं वटुकस्य च ४२
इक्षुतोयमपूपं च नैवेद्यं पायसान्वितम्
धूपदीपं तथा दत्वा तदूर्ध्वे पादपंकजम् ४३
बलिपिण्डं क्षिपेत्फट्कैर्नृत्तगीतेषु वाद्यकैः
पराङ्मुखार्घ्यं ददेच्छंभो त्वया भक्त्यात्मरक्षक ४४
भोगशक्त्या सहोशीशं संगृहेत्पादपंकजम्
गर्भगृहं समासाद्य मूलबेरे नियोजयेत् ४५
नित्यनैमित्तिकेत्युक्तं अर्धयामं सदाशिवम्
भोगमोक्षसुसायुज्ये योजयेत्तु जनार्दने ४६
अर्धयामविधिः प्रोक्तमर्धयामबलिं क्षिपेत् ४७
इति सहस्रतन्त्रे क्रियापादे अर्धयाम विधिः पंचमः पटलः ५

६

अथातः संप्रवक्ष्यामि शिवोत्सवविधिक्रमम्
सृष्टिस्थितिविनाशाय पंचकृत्येषु वृद्धिदम् १
उत्सवो शब्दमित्यर्थं शृणुष्वैव जनार्दन
चैत्रादिद्वादशान्तं च फल्गुन्यन्तं महोत्सवम् २
चन्द्रपक्षं विशेषेण सौरमासं विसर्जयेत्
शिवोत्सवो यात्रयागेषु त्रिविधमुत्सवक्रिया ३
नित्यनैमित्तिकाम्येषु तन्नित्यं नित्यपूजितम्
विषुवायननक्षत्रे मासपक्षेषु वत्सरे ४
पंचधा कृत्यमेवोक्तं नैमितिकमिहोच्यते
काम्यस्तु कालबन्धेषु नक्षत्रं स्वानुकूलयुक् ५
त्रिविधं नैमित्तिकं युक्तं काम्ये नैमित्ति पंचधा

एकत्रिपंचसप्ताहं नवाहं कन्यसत्रयम् ६
दिनसंख्यमिति प्रोक्तं शृणुष्वेवं जनार्दन
एकत्रिपंचवारेषु वर्जयेत्केतुरोहणम् ७
भेरीताडनतीर्थान्ते कलापे कर्मवत्क्रिया
आद्यौ द्वावपि वक्ष्यन्ते त्रिविधं च जनार्दन ८
ध्वजेषु सोमाख्यैर्न्नवं सप्ताहमंकुरैः
भेरीताडनतीर्थान्तकलाकर्म च कर्मवत् ९
अंकुरार्पणमुच्यन्ते भेरीताडनमुच्यते
धातुर्नाहपूर्वस्यात् रजनीं दुन्दुभिः क्रमात् १०
ताडयेत्केतुरोहादि तीर्थान्तं कर्मवत्क्रिया
भेरीताडनमुच्यन्ते ध्वजारोहणमुच्यते ११
नवसप्ताहसंख्याद्यैः आरोप्यं प्रथमे दिने
ध्वजदुन्दुभितीर्थान्तं क्रियायास्तत्क्रमेष्वपि १२
त्रिष्वप्येतेषु सारेण अंकुरार्पणमिच्छसि
उत्सवं बहुधा प्रोक्तं यजमानेच्छया सह १३
उत्सवे कर्म वक्ष्यन्ते शृणुष्वेवं जनार्दन
विशेषपूजनं चैव स्नपनोक्तं सदाशिवम् १४
गव्यपंचामृतोपेतं नवनैवेद्यमेव च
नित्योत्सवं महादेवं तच्छेषफलधृक् क्रियाम् १५
षड्विंशबहिरभ्यन्ते संनिधाने सदाशिवम्
इति विज्ञाप्य देवेशं विघ्नेश्वरमलंकृतैः १६
उत्सवक्रियायाद्यन्ते विघ्नसूर्यैर्विवर्जितैः
शिवाज्ञया परिपाल्येन सांनिध्यस्सर्वदा शिवम् १७
एवं विज्ञाप्य हेरम्बे लब्धानुज्ञेन दृक् क्रिया
स परिं चण्डमभ्यर्च्य कुन्दळ्यां स्थलिके सह १८
अलंकृत्य प्रदक्षिण्यां त्रिशूलेन समन्वितम्
देवतां वक्ष्यमाणं च अस्त्राधिष्ठितमेव च १९
पूर्वे वा पश्चिमे सौम्ये शुद्धदेशे वनेष्वपि
तद्देशं खड्गमंत्रेण प्रोक्षयेत्सेचने मृदे २०

बिल्वमूले समाश्रित्य दर्भकूर्चेन शोभितम्
हृन्मन्त्रेण समभ्यर्च्य पुण्याहप्रोक्षणन्तथा
नैवेद्यं धूपदीपञ्च वस्त्रकूर्चं स्थलिन्यसेत्
गोमयालेपनं कृत्वा अष्टद्रोणैश्च शालिभिः   २१
तदूर्ध्वे विन्यसेत्पद्मं षोडशैर्दळशोभितम्
दर्भैः पुष्पैः परिस्तीर्य स्थापयेद्घटिकं त्रये  २२
तन्मध्ये वर्धनीं कुंभेरर्चयेद्धूपदीपकम्
आसनशब्दपर्यन्तं तद्रूपं मूर्तिमेव च  २३
तन्मूलं शुद्धविद्यान्तव्यापयेदंकुराधिपम्
आसनं मूर्तिमूलेन पूजयेद्देशिकोत्तमैः   २४
श्वेतवर्णं द्विनेत्रं च सितमाल्याम्बरभूषणम्
सदायुक्तसनाळं च कुमुदपाणिप्रभासयेत्  २५
एवं ध्यात्वास्ससोमाय नैवेद्यं पायसं तथा
पालिकात्रयरूपेण तव शर्वाधिद्वादशम्  २६
त्रैमयं चाष्टलोकेशं अष्टाविंशत्सुरार्चनैः
हृन्मंत्रेण समभ्यर्च्य संग्रहेद्द्रव्यमेव च  २७
व्रीही च तिलमुद्गेषु सर्षपं माषमेव च
कुलत्थचिम्बाडके सप्तत्रीणि पंच क्षिपेज्जले  २८
पयसा प्लाव्य संयुक्तैस्सबीजैस्सप्तधातुभिः
हृदये निर्वपेत्सर्वं धूपदीपादिशोभितम्  २९
नित्यनैवेद्यतीर्थान्तं प्रत्यहं सोममर्चितम्
अंकुरार्पणहीने च शान्तिहोमे शताहुतिः   ३०
ध्वजकर्म प्रवक्ष्यन्ते शृणुष्वेवं जनार्दन
क्रमुकं नाळिकेरं च चन्दनं चण्डकं तथा  ३१
तत्र त्रयपरीणाहं प्रासादाग्रसमन्वितम्
शिखरे ऋषभश्शाला द्वितालाहं च कन्यसेत्  ३२
स्थापयेद्दण्डवत्प्रोक्तं रजते कंसमेव च
सौवर्णविधिरुक्तेषु स्थापयेद्रत्नमेव च  ३३
होमं वा रोषधी वापि न्यासयेद् ध्वजदण्डवत्

यष्टिकास्त्रितयं कृत्वा तन्मध्ये वेष्टदराडवत् ३४
रन्ध्रमध्ये तु वेणुं वै यष्टिदराडेन मूर्ध्वके
त्रितयष्टिं तदूर्ध्वे दराडाग्रे प्रणवं बलैः ३५
रज्जुं पूर्ववत्कृत्वा सहसेन वृषध्वजे
दर्भमाल्यैः परिभ्राम्य पंचांगं पदवेदिका ३६
दळाष्टकं तदूर्ध्वे तु दराडमूर्तिं सदाशिवम्
पटेन लक्षणं वक्ष्ये शृणुष्वेवं जनार्दन ३७
नूतनं लक्षणोपेतं नव सप्त च पंचमम्
रसेन निर्मितं दैर्घ्यं पंचहस्तेन निर्मयम् ३८
शिखरं लक्षणेथेष्टं तिंत्रिणीबीजमर्दनम्
श्वेतं रक्तं च बीजं च श्यामैस्सर्वत्रवर्णयुक् ३९
वृषभं विन्यसेन्मध्ये अस्त्रदेवं तदूर्ध्वके
तदूर्ध्वे छत्रमालाद्यैश्चामरैस्सर्वपुष्पकैः ४०
ऋषभं पादपद्मेषु पूर्णकुम्भेन मंगळैः
अंकुरैर्धूपयुग्मेषु खराडालंकृतचित्रकैः ४१
श्रीवत्सस्वस्तिकैः शंखैः पटे सर्वत्र लंकृतैः
शलाकां वेणुसंयुक्तं रज्जुखराडेषु क्षुद्रवत् ४२
प्रासादाग्रेषु कर्तव्यं मराटपं चतुरश्रकम्
वृषभस्थापनं वक्ष्ये शृणुष्वेवं जनार्दन ४३
स्नात्वा देशिकं पाद्यैः सकळी करणेष्वपि
मराडलं चतुरश्रेण व्रीहितराडुलविष्ठरैः ४४
शिवकुंभं न्यसेन्मध्ये पूर्वादिवसुमेव च
नवकुम्भं प्रतिष्ठाप्य पेशान्ये परशुं पदम् ४५
कलशाष्टौ न्यसेद्विद्वान् कर्करी कुम्भमध्यमे
पूर्वादीशानपर्यन्तं कलशैर्दशभिस्तथा ४६
मराडलं पूर्वदिग्देशे त्रिखराडेनात्मवत्त्रयम्
शान्तिकुंभं तदन्ते च वस्त्रकूर्चं शिरस्तथा ४७
गाळितं गन्धतोयेन पूजयेद्यागवस्तुषु
पर्यग्निकरणं कृत्वा तत्र सौम्ये स्थिते पटम् ४८

नेत्रोन्मीलनं कृत्वा मृत्युंजयमनुस्तथा
पंचगव्येन संप्रोक्ष्य दर्शनं धेनुकन्यया ४९
प्रोक्षयेदस्त्रमन्त्रेण तद्यागं पश्चिमे दिशि
रज्जुस्तम्भेषु संकल्प्य तत्पदे विन्यसेत्प्रभुम् ५०
अस्त्रकुम्भे परिभ्राम्य सामान्यार्घ्यं प्रदर्श्य च
इन्द्राद्यैर्लोकपालाद्यैः जनार्दनैस्समायुतम् ५१
धूपदीपं हृदा दत्वा विशेषार्घ्यसमन्वितम्
स्थण्डिले दक्षिणे पार्श्वे भूतशुद्ध्यन्तरीयताम् ५२
आसनम्मूर्तिमूलेन वृषभेन समन्वितम्
आसनं गन्धतत्वान्तं मूर्तिं वै शब्दमेव तु
तत्क्रियाशक्तिमूलेषु विन्यसेद्वृषभे हरिम् ५३
व्याप्तिव्यापकभावेषु आत्मतत्वादिखण्डकम्
पूर्वादीशानपर्यन्तमृक्षादीपरिविन्यसेत् ५४
धूपदीपं तथावेद्यं अग्निकार्यं समाश्रितम्
पंचसंस्कारमेवोक्तं होमयेद्यागसंयुतम् ५५
प्रत्येकं पंचविंशत्यैरात्मतत्वादिना हुनेत्
दर्भैर्लाजैः करैर्गृह्य जानुकण्ठशिरोवधीः ५६
आत्मतत्वं च विद्यान्ते शिवान्तं विद्ययान्वितम्
एकीभूतं शक्त्याहुत्यां शुध्यर्थं पञ्चविंशतिः ५७
पूर्णाहुतिं समाप्यं च पुनः कर्म च वक्ष्यते
आसनं प्रकृतिं कृत्वा भूतं मोहिनि मायया ५८
मूलमीश्वरपर्यन्तं अस्त्रमूर्तिं विभावयेत्
दक्षवामं च मध्यञ्च ब्रह्मविष्णुहराधिपाः ५९
होमयेत्प्रतिशतं हुत्वा प्रत्येकं शतसंख्यया
होमयेत्तत्पदं योज्य पूर्णान्तं स्त्रुक्स्त्रुवं न्यसेत् ६०
कुंभस्थ देवतान्सर्वान् पदे संयोजयेन्मनुम्
भेर्यार्चनविधिं कृत्वा शृणुष्वेवं जनार्दन ६१
भेरीमन्त्रेण संप्रोक्ष्य आसनं प्रणवस्य च
प्रणवात्मकमूर्तिं च अनुसंन्यायमेव च ६२

प्रणवोमाय संयुक्तं बिन्दुनादसमन्वितम्
शब्दतत्वपदेनैव नमो भेरीं महामनुम् ६३
सोमसूर्यशिवाभिन्नैर्नैवेद्यं धूपदीपकैः
ताडयेत्त्रिविधं ज्ञात्वा सप्तताळविधिं भवेत् ६४
वृषयागे चरुस्थालीं पाकं पक्वे चरुव्रतम्
दध्येन सह संयुक्तं त्रिशूलेन समन्वितम् ६५
सोमास्कन्देश्वरोपेतं चन्द्रशेखरमेव च
पटेन सह संयुक्तं ग्रामयेत्सर्वमंगळैः ६६
ब्रह्मस्थाने समाश्रित्य दिग्विदिङ्मण्डलं तथा
पुण्याहप्रोक्षणैर्युक्तं ब्रह्मस्थानेषु पूजितम् ६७
आसनं मूर्तिमभ्यर्च्य लाजपुष्पैः परिग्रहेत्
मुकुळीमुद्रयाचार्यं ब्रह्ममावाहयेच्छनैः ६८
प्रथमेऽहनि दातव्यं धूपदीपसमन्वितम्
मेघरागे तु नृत्ते च स्वस्तिकं लम्बुमेव च ६९
इन्द्रस्थाने समाश्रित्य लाजदर्भैस्त्रिधामनुम्
गान्धारे भैरवं नृत्तं भुजंगत्रासमेव च ७०
ऐन्द्ररूपं स्मरेत्तत्तद्वर्णरूपं यथोचितम्
कोल्लिजं पुटया नृत्तं मण्डलं भुजकुंचितम् ७१
कौशिकं कुंभवत्प्रोक्तं यमसंधिं विशिष्यते
विषयालज्ज्यसंघैश्री कामरं चरुणे दिशि ७२
गैरिकादूर्ध्वपादेषु वायव्ये केशमेव तु
तत्करागोवलहरी भूपाळं सोमसौन्दरे ७३
पंचमं भूतनृत्तं च आदिवच्च पुगैशधृक्
प्रणवादिनमोन्तैश्च स्वाहान्तैः प्रथमेहनि ७४
उत्सवं परिपालेन ब्रह्मादिदेवता न्यसेत्
दण्डस्य पूर्वदिग्भागे उत्सवेश्वरसंस्थिते ७५
रज्जुं खण्डेन बद्धेन पुण्याहं प्रोक्षणेष्वपि
आरोप्य शीघ्रमेवोक्तं बन्धयेद्रज्जु दण्डवत् ७६
पूर्ववत्कुंभसंपूज्य षडूर्ध्वमासनं न्यसेत्

दराडे सदाशिवो रूपस्निग्धपुष्पादिनार्चयेत् ७७
लोकपालबलिं दद्यात्तत्तत्पिराडे निवेदयेत्
प्रतिसरक्रमं वक्ष्ये शृणुष्वेवं जनार्दन ७८
यागद्वारे समाश्रित्य तद्वेरमुत्सवेश्वरम्
यागद्वारे स्थितं तत्र स्नापयेच्चन्द्रशेखरम् ७९
पुरायाहं प्रोक्षणं कृत्वा अष्टद्रोणैश्च शालिभिः
तदूर्ध्वे पादविन्यस्य तदूर्ध्वे स्थरिडलेन णूः ८०
भस्ममायास्तथास्वर्णैः ताम्बूलेन समन्वितम्
तत्सूत्रे लकुळीशं च अर्चयेद्धूपदीपकैः ८१
मंगळ्यां सूत्रवासेन दापयेत्परमेश्वरीम्
सोमास्कन्दं तथायुग्मे अर्चयेत्पूर्ववत्क्रिया ८२
देवस्य दक्षिणे हस्ते देव्या वामहस्तके
त्रिशूलं मध्यपत्रे च रक्षासूत्रेण बन्धयेत् ८३
धूपदीपं हृदा दत्वा चन्द्रशेखररूपधृक्
यागपूजाविधिं वक्ष्ये शृणुष्वेवं जनार्दन ८४
ऐशान्ये सौम्यदिग्भागे कल्पयेद्यागमन्दिरम्
नवाग्निं वाथ पंचाग्निं मध्ये वेदि समन्वितम् ८५
दर्पणोदरसंकाशं कुराडमराटपवेदिका
यागद्वारे त्रिशूलेन चतुर्द्वारे समन्वितम् ८६
दर्भा दामैरलंकृत्य कुम्भे वा चूतपत्रवत्
अलंकृत्य शिवो यागं यागवास्तुं हुनेच्छतम् ८७
पर्यग्निकरणं कृत्वा संस्कारैश्च चतुर्दशैः
गव्यसंप्रोक्षयेत्सर्वं वेदिकाग्रे न्यसेत्ततः ८८
षट्त्रिंशद्द्रोणशाली स्यात्तराडुलैस्तिललाजकैः
दळाष्टकं समोपेतं तत्तत्स्थाने प्रतिष्ठितम् ८९
पूर्वादीशानपर्यन्तं कुंभे स्यात्सप्तविंशतिः
शिवकुंभं न्यसेन्मध्ये पंचरत्नादि संयुतम् ९०
वर्धनीं कूर्चसंयुक्तं वामपार्श्वे प्रतिष्ठितम्
पूर्वादीशानपर्यन्तं कुंभैरष्टदळान्वितम् ९१

कूर्चपत्रेषु सर्वेषु अभिधाने शिवस्तथा
चित्रवस्त्रैरलंकृत्य ऐशान्ये परशुं तथा ९२
अस्त्रपूजां समभ्यर्च्य भ्रामयेत्कुंभकर्करीम्
सव्ये सोमादिलीचीळी भ्रामयेत्परशुन्ततः ९३
वीरासनं समभ्यर्च्य द्वारपूजां समाचरेत्
शान्तिभीतिर्बलारोग्ये अर्घ्योदकसमन्वितम् ९४
नन्द्यादिद्वारदेशेषु भास्करे पूर्ववद्भवेत्
ब्रह्मादिलोकपालेषु अर्चयेत्तु जनार्दन ९५
धूपदीपे परिभ्राम्य भूतशुध्यादिमाचरेत्
विशेषार्घ्यं सुसंकल्प्य पूजयेत्कुंभदेवतान् ९६
आसनं मूर्तिमूलेषु शिवकुंभं न्यसेच्छनैः
शुद्धविद्यासमारूढं ईश्वरं मूर्तिमेव च ९७
मंत्रो सदाशिवो रूपं तत्कुम्भे रुद्रमुच्यते
संहितामनुरूपेण क्रियाशक्तिश्च वर्धनीम् ९८
अनन्तादिशिखण्ड्यन्तं विद्यातत्वं व्यवस्थितम्
तत्पुरुषे मूर्तिरूपं च मूलमायासमन्वितम् ९९
शुद्धविद्या तदूर्ध्वे तु विन्यसेत्तु शिखण्ड्यकैः
विद्येश्वरमिति ध्यात्वा बुद्धिमाञ्ज्ञेयसंभवैः १००
सृष्टिस्थितिलयान्तेषु आसनं मूर्तिमूलवत्
वज्रादिशूलपर्यन्तं परचक्रं दशायुधम् १०१
अर्चयेद्गन्धपुष्पाद्यैः प्रणवादिनमोऽन्तकैः
नैवेद्यं धूपदीपं च होमकर्म समाचरेत् १०२
अग्निकार्यविधिं वक्ष्ये शृणुष्वेवं जनार्दन
निरीक्षणत्रयसंयुक्तं चतुर्दशसमन्वितम् १०३
रेवात्रयचतुष्केषु वज्रीकरणचतुष्टयम्
प्रणवेनासनं कल्प्य वागीश्वरेण संयुतम् १०४
अग्निबीजेन संयुक्तं क्रव्यादांशं परित्यजेत्
संहितामनुसंपूज्य धेनुमुद्रावकुण्ठयेत् १०५
प्राच्यादि पंचमार्गेण होमयेद्देशिकोत्तमः

अग्निं सर्वत्र कुण्डेषु दिग्विदिक्षु समाश्रितम् १०६
ईश तत्पुरुषाघोरवामसव्येन पञ्चवत्
होतारः पञ्चवक्त्रेषु बुद्धिमाज्ञेयमाश्रितम्
पञ्चवक्त्रेषु कुण्डेषु तत्तद्देशे विचक्षणैः १०७
विचक्षणे विशेषेण आचार्येण समन्वितम्
पंचवक्त्रेषु सर्वे वा पंचदेवात्मकं विदुः १०८
पंचसादाख्यशक्तिर्वै पंचमुद्रेण संयुतम्
प्राधान्ये कुण्डमाश्रित्य तत्र रूपेण भावितम् १०९
ईशानं स्फटिकाकारं शान्त्यतीत कलान्वितम्
ईशाने मूलरूप्यन्तमालम्बं शुद्धविद्यया ११०
शक्तिश्शिवं तदूर्ध्वेषु यः प्राणश्च योजयेत्
ज्ञेयसंयुक्तके विद्वान् नियमेन सुसंस्थितम् १११
मूलाधारे समाश्रित्य भावयेद्भावनश्शिवम्
आवाहयेत्ततो देवं आदिमं त्रितयं मनुः ११२
तिलसर्षपमुद्गाद्यैः होमयेच्छतभूतिषु
पुरुषेण समाश्रित्य पुरुषं कुंकुमप्रभम् ११३
मूर्तिवक्त्रेण संयुक्तं तत्तन्मंत्रैः शताहुतिः
अघोरमंजनप्रख्यं समित्कुशफलान्वितम् ११४
वामदेवं तथा रक्तं संहारेण समन्वितम्
होमयेद्दधिसंयुक्तं लतानामंगुलद्वयम् ११५
दधिदुग्धं समायुक्तं होमयेद्वामदेवसु
सद्येन पयसापिष्टैः होमयेत्पंचवक्त्रके ११६
ईशाने पंचविंशत्या पूर्णाया सहितं शिवम्
अन्तर्बलिं क्षिपेत्तत्र कुम्भे सर्वत्र योजयेत् ११७
यागाधिवासनं कृत्वा मूर्तिहोमं तु पूर्ववत्
उत्सवांकुरतीर्थान्तं होमयेत्तु दिने दिने ११७
प्रातस्संध्यार्चनं कृत्वा नैवेद्यं धूपदीपकैः
अग्निकार्यविधिः प्रोक्तं बलिदानं ततः शृणु ११८
अन्नलिंगं समभ्यर्च्य अस्त्रदेव समन्वितम्

पिंछचामरघोषाद्यैः वाद्यसंगीतेषु संयुतम् ११९
दध्याज्यचरुसंयुक्तं ब्रह्मादिषु जनार्दन
स्वाहान्तैः स्वस्वनाम्नेन पूर्वादीशानसंयुतम् १२०
पश्चिमाभिमुखं देवं पीतवस्त्रोत्तरीयकम्
पूर्वस्थाने ध्वजारोप्य किंचिद्भेदं जनार्दन १२१
पुरुषं पश्चिमे पूर्वे सद्यो जातेन मंत्रवित्
अघोरं दक्षिणे वामे वामदेवेषु वक्त्रवत् १२२
ईशानमूर्ध्वमैशान्ये होमयेद्देशिकोत्तमे
वारुणादिनिर्ऋत्यन्तं बलिं सर्वत्र योजयेत् १२३
तच्छेषं पिण्डकायुक्तं बलिपीठे बलिं क्षिपेत्
देवयानविधिं वक्ष्ये शृणुष्वेवं जनार्दन १२४
स्नापयेन्नवकुंभेषु वस्त्राभरणमेव च
अलंकृत्य निवेद्यं च यानयेद्द्वित्रि संधिषु १२५
बलिहोमादिनित्यत्वं मध्याह्नेषु विवर्जयेत्
दूरदेशाश्रमं याने प्रातर्युक्तं सुपूजितम् १२६
यानयेन्मूलबेरेषु भ्रामयेदालये तथा
यागद्वारे समाश्रित्य धूपदीपसमन्वितम् १२७
यात्र्यराक्षससंयुक्तं स्नापयेत्तु महेश्वरम्
आचार्यः शिष्यसंयुक्तं होतारस्सेवकाद्यकैः १२८
मुकुळीकृत्य मूत्रेण एतैरग्निश्रुतिस्तथा
लाजं श्रुतिप्लुतोपेतं यजेद्देवस्य मूर्धनि १२९
नृत्तगीतेषु सर्वेषु प्रातः काले पितृ प्रसु
प्रथमं वृषयन्त्रे च द्वितीयं पद्ममूर्ध्वके १३०
भूतवाहं तृतीये च सिंहयंत्रं चतुर्थके
पंचमं तु गजारूढं याळिकारसमेव च १३१
कैलासे रक्षसंयुक्तं सप्ताहे वा विशेषतः
अष्टमं वाजिसंयुक्तं मृगयात्रां विशेषतः १३२
नवमं रथमारोप्य दशमं ध्यानमेव च
अग्निस्थशिवरूपेण ईश्वरो बलिभुक् परे १३३

रुद्रस्थं कुंभमध्यं च लिंगस्थं च सदाशिवम्
प्रतिमादिमहेशानमुत्सवं पंचकृत्यवत्  १३४
ज्ञेयं तद्दिनपंचेषु पंचवक्त्रेषु सर्वदा
पंचाहे वाथ गन्धं च दापयेच्चन्द्रशेखरम्  १३५
सोमधारी च सर्वेषु दापयेद्देशिकोत्तमः
यकृत्कर्दमसर्वेषु नृत्तमूर्तिपुरे तथा  १३६
नटेशस्योत्सवं वक्ष्ये शृणुष्वेवं जनार्दन
अंकुरार्पयेत्पूर्वं रक्षाबन्धनमेव च  १३७
ग्रामप्रदक्षिणं कृत्वा अपरे कृष्णजन्मसु
प्रातः काले भ्रमे +++ योग्ये मधारीसशिवा  १३८
यानयेत्पूर्ववत्स्थाने नैवेद्यं धूपदीपकम्
नृत्तमूर्तिविशेषेण स्नपनं पंचविंशतिः  १३९
कस्तूरीखिलसंयुक्तं चन्दनं हिमसेचनम्
संगृह्य कृष्णवद्गन्धमपरे वैश्यहस्तयुक्  १४०
शुद्धये पञ्चविंशत्या प्रत्येकं तु शताहुतिः
संहितामंत्रघोरे तु अर्चयेत्कृच्छ्रगन्धवत्  १४१
पूर्णाहुतिं जुहेद्वह्नौ धूपदीपं निवेदयेत्
प्रासादं तु प्रदक्षिण्यां स्थापयेन्नृत्तमूर्तिषु  १४२
पुण्याहं वाचयेत्प्रोक्ष्य अर्चयेत्परमेश्वरम्
विशेषार्घ्यं सुसंकल्प्य धारिकां शक्तिसंयुतम्  १४३
अनन्तशिवयागादिरष्टकं कर्णिकान्तकम्
मूर्तिदेहशिवं ध्यात्वामनन्तमव्ययं विभुम्  १४४
अनन्तेन समोपेतं चिच्छक्तिसहसंयुतम्
आवाहयेत्ततो देवं प्रासादेन मनुं शिवम्  १४५
अवकुण्ठनपंचैते धेनुपद्मं त्रिशूलयुक्
त्रिखण्डमुद्भवोपेतं पंचमुद्रां प्रदर्शयेत्  १४६
प्रासादेन समोपेतं संहिताद्यमनुव्रजेत्
अर्चयेद्धूपदीपं च श्रीकण्ठं तत्वमूलकम्  १४७
अष्टत्रिंशं न्यसेत्पश्चात्पुनर्देहं न्यसेद्धितम्

लयांगमर्चयेत्पूर्वं भोगांगन्यासंसंयुतम् १४८
आवाहयेत्क्रियाकाण्डं तन्मंत्रं मंत्रमुच्यते
प्रणवं माययाबिन्दुं स्थूलप्रासादसंयुतम् १४९
बिन्दुनादसमायुक्तं अनन्तताण्डवे नमः
आवाहनक्रमं पंच भूतभावितमीश्वरम् १५०
पंचावरणमार्गेण अर्चयेद्धूपदीपयुक्
कृष्णगन्धमलंकृत्य कल्हारमुकुळी सह १५१
वर्जयेत् विकसितं पुष्पं कह्लारमुकुळीकृतम्
तत्र गन्धं न्यसेत्पुष्पं गौरी हस्ते सुभाषितम् १५२
मूर्ध्नि चैव ललाटे च कण्ठे च हृदये तथा
कुक्षिजातुमपस्मारं दापयेत्तु नटेश्वरम्
मूर्ध्नि चैव ललाटे च हृदये कण्ठमेव च १५३
चिच्छक्तिं दापयेत्पश्चात्तद्गन्धं यागरुद्र तु
महाहविर्निवेद्यं च मुखवाससमन्वितम् १५४
ताम्बूलं धूपदीपं च आरात्रिकसमन्वितम्
उपचाराणि सर्वेषां नृत्तमूर्ते समर्पणम् १५५
आचार्यन्तु तदूर्ध्वेन सव्यभागे सुखासनम्
पद्मासनं विशेषेण तुम्बुरुं मनुशंखवत् १५६
प्रणवं ह्रस्वचिन्तायां आनन्तभैरवाय च
नमः स्वाहा सुसंयुक्ते देशिकः पुत्रवत्स्थितम् १५७
अन्यथा वर्जयेत्पीठे अन्यथा +++ न पश्यति
अन्यथाजप्यपीठोर्ध्वं नृत्तपंकोत्सवं पुनः १५८
प्रासादं तु प्रदक्षिण्यां प्राग्दे दक्षे विधीयके
गृहे सप्त ऋषिश्शालां दक्षस्य निर्भरो ऋषिः १५९
तत्पदे ब्रह्मविष्णुं च भ्रामयेद्ग्रहधातु सः
भ्रामयेत्सर्वघोषेण पूर्ववन्मण्टपेश्वरम् १६०
स्नपनं पंचविंशत्या पूजयेद्रक्तवस्त्रकैः
माल्यगन्धविभूषाद्यैः शुद्धान्नं पायसेन च १६१
नैवेद्यं धूपकर्पूर दीपवद्दर्शवद्भवेत्

शिवश्शक्तिस्समाकीर्णे भ्रामयेच्चित्रनन्दके १६२
स्वप्नसंवेदघोषेण ज्ञेयध्यानादिसंयुतम्
भ्रामयेत्पूर्ववत् कृत्वा अन्यघोषेण वर्जयेत् १६३
अन्यथा घोषसंयुक्तैः राजराष्ट्रं विनश्यति
वादयेद्घोषसंयुक्ते आहुनेत्तु चतुश्शति १६४
पूर्ववत्मण्टपे स्थाप्य अष्टोत्तरशतं तथा
चित्रवस्त्रैरलंकृत्य कह्लारैः कुसुमान्ययुक् १६५
अन्यथा पुष्पदामैश्च शमी चंपकजातियुक्
वर्जयेद्देवदेवी स्यात् कह्लारैर्जातिसंयुतम् १६६
पूर्ववत्पूजितं तत्र यागदेवेश्वरं तथा
अर्चयेद्भ्रू इति +++ नैवेद्यं धूपदीपकैः १६७
कृष्णं गन्धे नमस्कृत्य होमयेत्पंच विंशतिः
शेषं शुद्धार्थहोमेन दापयेन्नृत्तसंनिधिम् १६८
पंचावरणमार्गेण अर्चयेन्नटमूर्तिषु
पूर्ववद्देवदेवीं च दापयेत्कृष्णगन्धवत् १६९
नैवेद्यं धूपदीपं च सर्वघोषैरलंकृतम्
सर्वलोकप्रियार्थं च निर्वाणे पादमाश्रितम् १७०
भ्रामयेत्प्रत्युषे काले भ्रामयेत्फलमेव च
आचार्यं दक्षभागेन तुम्बुरुं पूर्वमुच्चरेत् १७१
आलयं तु प्रदक्षिण्यां कर्तव्यं परमेश्वरम्
भोगमोक्षप्रसिध्यर्थं भुवनत्रितयेषु च १७२
इति विज्ञाप्य देवेशं दापयेद्गन्धहस्तवत्
आचार्यश्शिष्यहोतृभ्यै तत्कर्ता दापयेन्मनु १७३
सवेष्वारात्मसंख्येषु दापयेत्कृष्णगन्धवत्
ग्रामप्रदक्षिणं कृत्वा कौतुकं तीर्थसंयुतैः १७४
पृष्ठभागे मतंगेन मद्दळे पटहं तथा
वातयेन्नृत्तसंख्यैश्च रक्षां सूत्रपरिग्रहे १७५
पूर्ववन्मण्टपे स्नाप्य उपचाराणि सर्वशः
आचार्यमनसा प्रीत्य मंत्रेणैव जनार्दन १७६

चूर्णोत्सवविधिं वक्ष्ये सर्वकिल्बिषनश्यति
सोमास्कन्देश्वराग्रेण मण्टपं चतुरश्रकम् १७७
शालितण्डुलसंयुक्तैः तत्पूर्वे गुणलोमतः
व्रीहिमण्डलतन्मध्ये स्थलिके वा समन्वितम् १७८
तत्पूर्वे स्थण्डिलादूर्ध्वे उलूखलं च हरिद्रुकम्
उलूखलं ब्रह्मदैवत्यं मुसलस्तु जनार्दने १७९
हरिद्रं परयारूढां तद्भस्म देवताप्रियम्
पूर्ववदंकुरोपेतं तच्चूर्णं शषकं ग्रहेत् १८०
शुद्धतैलेन संस्नाप्य स्तुत्यर्थं तु शताहुतिः
दूर्वतैलेन संयुक्तं दापयेत्परमेश्वरम् १८१
भेरीं तु पूर्वमभ्यर्च्य ताडयेत्त्रिविधं मनुः
तैलचूर्णप्रदं दद्यात् जनसंघेषु भक्तवत् १८२
ग्रामप्रदक्षिणं कृत्वा सायं काले विशेषतः
नदीतीरे तटाके वा मण्टपं चतुरश्रकम् १८३
नाळिकेरदळोपेतं पुण्याहप्रोक्षणेषु च
देवता स्थापनं कृत्वा त्रिशूलेन समन्वितम् १८४
स्नपनं नवकुम्भेषु स्नापयेत्परमेश्वरम्
फले सर्वत्र नैवेद्यं अन्यथा वर्जयेच्छिवम् १८५
प्रदक्षिणविधिं पूर्वं ध्वजस्थाने समाश्रितम्
पूर्ववत्प्रदक्षिणोपेतं नैवेद्यं बलिचूर्णकैः १८६
दण्डमभ्यर्च्य नैवेद्यं धूपदीपं तथा भ्रमः
रज्जुसंप्रोक्ष्य तच्छक्तिं मूलबेरे नियोजयेत् १८७
प्रासादे ऊर्ध्वदण्डे च योजयेद्भावितं हृदि
अवरोहणसंहृत्य यागवत्पूर्वमर्चयेत् १८८
पूर्णाहुतिप्रदाने च दक्षिणे च गृहीतयुक्
यागदेवो निसृज्येषु द्वाराध्यक्षेषु संयुतम् १८९
शिवकुम्भोऽष्टविद्येषु वर्धनीं सर्वघोषणैः
प्रासादन्तु प्रदक्षिण्यां चण्डकुम्भेन संयुतम् १९०
स्नपनेन सहस्रेण गव्यं पंचामृतेन च

सुस्नाप्य च जगन्नाथे शिवकुम्भे च मूर्धनि १९१
वर्धनीं पिण्डिकाग्रेषु अनन्तादीन् दळे न्यसेत्
नैवेद्यं धूपदीपं च पूर्वोक्तविधिना सह १९२
चण्डकुंभं न्यसेच्चण्डे चण्डमंत्रे शताहुतिः
पटेन चण्डवद्ध्यात्वा होमयेत्पटसंयुतम् १९३
चाण्डमंत्रेण पूर्णान्तं संधिदेवान्बलिं ददेत्
तत्र देवेन संयुक्तं शर्वाणीं कौतुकं ददेत् १९४
सायं काले विशेषेण अलंकृत्य सदाशिवम्
नैवेद्यं धूपदीपं च भ्रामयेद्दिशि रीशयुक् १९५
भक्तोत्सवविधिं वक्ष्ये शृणुष्वेवं जनार्दन
अंकुरार्पयेत्पूर्वं रक्षाबन्धनमेव च १९६
सौन्दरं चण्डसंपन्ने अर्चयेद्धूपदीपकम्
एकत्रिरक्षरेदूर्ध्वं बिन्दुनादसमन्वितम् १९७
स्वस्वनामनमोन्तेषु जातिषट्कोणसंयुतम्
पुष्पाभरणमाल्याद्यैः भ्रामयेदालयं प्रति १९८
आचार्यं तु समाश्रित्य पंचांगभूषणैस्स च
दशपंचवसो निष्कवस्त्रहेमांगुळी पि च १९९
भक्तेभ्यः परिचारेभ्यो दक्षिणां संप्रदाय च
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् २००
सायुज्यपदमाप्नोति राजराष्ट्रसुखावहम्
शिवोत्सवविधिं प्रोक्तं प्रायश्चित्तविधिं शृणु २०१
इति श्रीसहस्त्रतन्त्रे क्रियापादे महोत्सवविधिपटलः ६

७

प्रायश्चित्तविधिं वक्ष्ये शृणुष्वेवं जनार्दन
मृत्संग्रहणहीने च अंकुरार्पणहीनके १
वृषयागविहीने च वृषरक्षाविहीनके
पटेन वर्णहीने च क्षुद्रखण्डविहीनके २
प्रतिसरयागहीने च कुण्डमण्टपहीनके

यागाधिवासहीने च यागवास्तु विहीनके ३
पर्यग्निकरणे हीने होतृभिश्च विहीनके
पटेन पतिते खण्डे रज्जुर्वै दर्भमालया ४
उत्सवेश्वरयाने च पतिते स्फोटनादिके
यागद्वारे समाश्रित्य लाजेन सह धूपके ५
लांजोपचारहीने च भ्रामयेत्तु विहीणके
बलिपात्रविहीने च यागद्रव्यविहीनके ६
राजराष्ट्रं विनश्यन्ति परचक्रभयप्रदम् ७
मूर्तिहोमं सहस्रं च आहुनेद्देशिकोत्तमैः
शान्तिहोमयुतं कृत्वा पूर्णया सहितं तथा ८
यानकाले परिषिच्य ग्रहणे शशियुग्मवत्
यानकाले तु वृष्टिश्च नानायन्त्रविहीनके ९
बलिहोमविहीने च नित्यपूजाविहीनके
चित्रदीपविहीने च छत्रचामरहीनके १०
नानावाद्यविहीने च नानाघोषविहीनके
शान्तिहोमशतं हुत्वा मूर्तिहोमं जनार्दन ११
होमकर्मविहीने च होमद्रव्यविहीनके
ध्वजांकुरार्पणे हीने भेरीताडनहीनके १२
रक्षाबन्धनहीने तु तीर्थकर्मविहीनके
चूर्णोत्सवविहीने च संभावनाविहीनके १३
कुंभाभिषेकहीने च विशेषपूजा विहीनके
ध्वजावरोहणे हीने लोकपाला विसर्जने १४
चण्डयागविहीने च मौनयानविहीनके
बलिभूतविहीने च विसर्जने विहीनके १५
शक्त्युत्सवविहीने च ज्वरमार्यास्वसंभवेत्
मूर्तिहोमं सहस्रेण शान्तिहोमं तदाचरेत् १६
नानायन्त्रतदूर्ध्वे तु आरूढेन विहीनके
नानायन्त्रसुसंप्रोक्ष्य रथसंप्रोक्षणे तथा १७
वृषयन्त्रविहीने च गजयन्त्रविहीनके

सिंहयंत्रविहीने च हंसयन्त्रविहीनके १८
चित्रकूटविहीने च रथभूतविहीनके
कैलासराक्षसायंत्रे मल्लयुद्धे विहीनके १९
फलके पिण्डिकाहीने स्थाननाशं नृपस्तथा
शतसहस्रयुतमूर्तिं शान्तिहोमं समाचरेत् २०
अस्त्रयागविहीने च ध्वरक्षाविहीनके
सूत्रवासविहीने च नित्यस्नपनहीनके २१
मंत्रतंत्रविहीने च राजराष्ट्रं विनश्यति
शान्तिहोमहुतं चैव दिशाहोमयुतं तथा २२
ग्रामप्रदक्षिणे हीने शान्तिहोमं सहस्रके
बलिहोमार्चनाहीने पंकोत्सवविहीनके २३
वितानच्छत्रहीने च सौख्यं नृत्तविहीनके
रथे काहनिशी मध्ये संकटे दिशि होमयेत् २४
ध्वजे च पतिते सर्वं पुन्युत्सवमाचरेत्
मासपूजाविधिहीने च नित्योत्सव विहीनके २५
नित्यपूजावहीने च पुनरुत्सवमाचरेत्
सायरक्षाविहीने च नीराजनविहीनके २६
शशिन्दुत्सवहीने च उत्सवे मध्यमेव च
नित्यपूजासमं प्रोक्तं तन्मासोत्सवयानके २७
उत्सवं मध्यमे दन्त्ये रादिपर्वदशक्तयकम्
संग्रहेदन्यथा ऋक्षे तन्त्र तन्त्रं समाचरेत् २८
यत्र यत्र दिने योज्य यत्र यत्र वदाचरेत्
किल्बिषं बहुधा चैवं मासोत्सवं समाचरेत् २९
मासोत्सवं त्यजेत्काले पुनरुत्सवमाचरेत्
ध्वजारोहादितीर्थान्तकिल्बिषं गरुडध्वजम् ३०
आज्येन चरुणा द्रव्यैः समिद्द्रव्येन संयुतम्
पूर्णाहुतिं समाप्याथ आचार्येण समन्वितम् ३१
प्रतिसंवत्सरं कृत्वा चार्यज्ञेयसमं भवात्
आचार्यमनसा प्रीतिं शिवलोके महीयते ३२

प्रायश्चित्तविधिं वक्ष्ये सशिवब्राह्मणो गुरुः
अन्यथा राजरा +++ रकं व्रजेत् ३३
शिवोद्भगवेन शैवे तु सौवोद्भवं सदाशिव
शिवो शैवेन शुद्धात्मा सशिव ब्राह्मणो गुरुः ३४
प्रतिष्ठाद्युत्सवे तीर्थे स्नपने सर्वकर्मसु
सशिवब्राह्मणैर्युक्तं अन्यथा पुनरुत्सवम् ३५
प्रायश्चित्तविधिः प्रोक्तं सकृन्मासाश्रमं शृणु
इति सहस्रतन्त्रे क्रियापादे उत्सवप्रायश्चित्तविधिः सप्तमः पटलः ७

८

अथातस्संप्रवक्ष्यामि सोमास्कन्देश्वरं शिवम्
एकाहं वा त्रियाहं वा अंकुरार्पणमाचरेत् १
ध्वजादि वेदतद्रक्षं कौतुकं बन्धयेच्छिवम्
देवदेवं समभ्यर्च्य स्नपनं नवकुम्भकम् २
अभिषिच्यं तथात्मानं सोमं वा चन्द्रशेखरम्
युग्ममेकं समभ्यर्च्य नवाहोत्सवमाचरेत् ३
ग्रामप्रदक्षिणं कृत्वा पंचाहे यक्षकर्दमम्
कौतुकं तीर्थतच्छूलं प्रातरे वा समन्वितम् ४
ग्रामप्रदक्षिणं कृत्वा पूर्वोक्तविधिना सह
मध्याह्ने सायसंध्यां वा यक्षकर्दमलेपनम् ५
महोत्सवाभ्यन्तरे वापि यागशालाग्निसंमुखम्
यक्षकर्दमकस्तूरी कर्पूरैरखिलान्वितम् ६
स्वर्णपात्रे विनिक्षिप्य रजतपात्रे विनिक्षिपेत्
पंचाग्न्यायतनं चेत्तु होमयेत्संहिता मनुम् ७
अन्यहस्तस्थितं गन्धं वर्जयेत्परमेश्वरम्
वैश्यहस्तस्थितं शुद्धं तद्गन्धं च शताहुतिम् ८
अभिमंत्र्यं हिता मंत्रैः स पूर्णा संहिता हुनेत्
शंखकाहळवाद्यादि छत्रचामरसंयुतम् ९
परिचारकमूर्ध्या स्थापितं गन्धमेव च

प्रासादप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति १०
स्थलिके विन्यसेद्गन्धं तद्गन्धं प्रोक्षणं सुधीः
पुण्याहप्रोक्षणं कृत्वा ब्राह्मणान्स्वस्तिवाचकैः ११
तत्तद्देवार्चनं कृत्वा आसनत्रितयं न्यसेत्
देहतोतृषडंगैश्च अर्चयेत्पूर्ववन्न्यसेत् १२
श्रीकण्ठश्च कलान्यासमादिरध्वन्यसेच्छिवम्
पंचावरणमार्गेण पूजयेत्तदनन्तरम् १३
भोगांगमर्चनं प्रोक्तं तन्त्रांगस्य ततः शृणु
आधारादिशिवं प्रोक्तं चासनं मूर्तिमूलकैः १४
व्याप्तिव्यापकभावेन सदाशिवाय समन्वितम्
धूपदीपं हृदा दत्वा वेदघोषैरलंकृतम् १५
कृष्णगन्धस्य तन्मध्ये महानीलोत्पलान्वितम्
धूपदीपं विशेषेण ब्राह्मणास्वस्तिवाचकैः १६
कृष्णगन्धं समुद्धृत्य आचार्याय प्रदापयेत्
मकुटे मूर्ध्नि फाले च हृदये नाभि जानुषु १७
दापयेत्तु महादेव देवीनां धूपदीपकम्
हृदये कण्ठदेशं वा ललाटे कृष्णगन्धकम् १८
स्थापयेदन्यथा स्थानं राजराष्ट्रं विनश्यति
अन्यथा दापयेत्स्थानं शान्तिहोमं शताहुतिः १९
महाहविर्निवेद्यं च मुखवासेन संयुतम्
कर्पूरदीपवत्कृत्वा ताम्बूलं भक्ष्यपानकम् २०
इक्षुसारद्वयोपेतं नाळिकेरं निवेदितम्
ताम्बूलं दर्पणं दद्यात् छत्रचामरपिंछकैः २१
राजोपचारमार्गेण नीराजनसमन्वितम्
ताळकाहळभेरीं वा दुन्दुभिर्मदळैर्युतम् २२
ब्रह्मभेरीमहाभेरीं खण्डभेरीं त्रिधा समम्
धवळौ घटवीणा वा नागचिह्नस्य सेवितम् २३
ग्रामप्रदक्षिणादूर्ध्वं प्रासादेन तु प्रदक्षिणम्
यागद्वारे स्थितं शंभुर्देवीनां यागसंमुखम् २४

यागद्वारे प्रविश्याथ आचार्यः शिष्यहोतृभिः
आचार्यं च तदूर्ध्वे तु पाद्यमाचमनार्घ्यकम्  २५
धूपदीपं त्रिधाभ्राम्य आरात्रिकसमन्वितम्
सौम्यं कुण्डस्य तद्भस्म दापयेदुत्सवेश्वरम्  २६
लाजोपचारवत्कृत्वा मुकुळीमुद्रयान्वितम्
ओमिति ब्रह्ममंत्रेण त्रियम्बके विश्वतम्मनुम्  २७
अन्यथा दीपिकं मंत्रं तन्मन्त्रं सहसेवितम्
अन्यथा वर्जितं मंत्रं द्वित्रिकाले भित्तिर्मनुम्  २८
संवीक्ष्य देवता पीठे नृत्तवाद्य समन्वितम्
ग्रामप्रदक्षिणं कृत्वा तत्तन्मध्ये च नृत्तकम्  २९
देवालयं समासाद्य निर्माल्यं चण्डवद्धृदि
आचार्यदक्षिणां दद्याद्गोभूहिरण्यमेव च  ३०
मदनोत्सवे वसन्ते च पवित्रे वा शिवोत्सवे
तत्तत्पंचाहतत्कर्ममन्यथा वर्जयेद्बुधैः  ३१
सायुज्यं संपदं प्राप्य राजराष्ट्रविवर्धनम्
सोमधा चिन्तयेत्सर्वं पवित्रे मदनोत्सवे  ३२
महोत्सवे शिवरात्रिं वा वसन्तोत्सवमेव च
सोमास्कन्देश्वरोपेतं तथा वा चन्द्रशेखरम्  ३३
वर्जयेदन्यतद्रूपं राजराष्ट्रं विनश्यति
सोमधारी शशीधारी उत्सवं संप्रकीर्तितम्  ३४
आदिरूपोत्सवं प्रोक्तं नृत्तेशोदुत्सवं शृणु  ३५
इति सहस्रतन्त्रे क्रियापादे आदिपंकोत्सवविधिरष्टमः पटलः  ८

९
नृत्तपंकोत्सवं वक्ष्ये शृणुष्वेवं जनार्दन
शिवोत्सवे च आर्द्रे च मदनोत्सवमेव च  १
विधिनृत्तोत्सवं कृत्वा अन्यथा राष्ट्रकिल्बिषम्
सप्ताहे सायरक्षां वा सहस्रकलशान्वितम्  २
अष्टोत्तरं नवं कृत्वा स्नपनोक्तं यथोचितम्

पुरायाहप्रोक्षरां कृत्वा तदूर्ध्वे व्रीहितराडुलैः ३
दळाष्टकसमोपेतं विचित्रं केसरान्वितम्
तदूर्ध्वे लेखिनोपेतं तदूर्ध्वे रजतस्थलम् ४
तदूर्ध्वे तराडुलं सूत्रं होमकार्पाससंयुतम्
पूगीफलं नाळिकेरं कल्पं तद्भस्मसंयुतम् ५
तद्भस्मं मायया तत्वं तत्सूत्रं लकुळीश्वरम्
पुरायाहप्रोक्षरां कृत्वा नृत्तेश्वरस्य संनिधिम् ६
धूपदीपं परिभ्राम्य देवदक्षिराहस्तके
देवीनां वामहस्तेन त्रिशूलं मध्यदराडवत् ७
प्रासाददक्षिरां कृत्वा ग्रास्थानमराटपस्थितम्
जागरं नृत्तवत्कृत्वा नित्यनैमित्तिकक्रियाम् ८
ध्वजोरुत्सवतन्मध्ये प्रत्यूषभ्रामरां विना
प्रभाते सोमधायुग्म प्रकारे पूर्ववद्क्रमात् ९
सायं संध्यार्चनं कृत्वा नित्यपूजासमन्वितम्
ग्रन्यथा हस्तगन्धेन राजराष्ट्रं विनश्यति १०
मूर्तिहोमयुतं कृत्वा प्रायश्चित्ताहुतिर्भवेत्
नृत्तेश्वरं समभ्यर्च्य चित्रवस्त्रैरलंकृतम् ११
तद्गन्धं शुद्धिदं कृत्वा नृत्तमूर्तिं सुसन्निधिम्
पुरायाहं वाचयेत्कृत्वा गन्धपुष्पाक्षतान्वितम् १२
स्वर्राधुत्तूरन्द्रेरोषु नीलधूर्धूरमेव च
नृत्तपूजाविधिं वक्ष्ये शृराुष्वेवं जनार्दन १३
ग्राधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम्
छदयुग्मसुगन्धेषु बीजेषु मराडलं त्रयम् १४
ग्रासनं मूर्तिसंयुक्तं ग्रष्टत्रिंशत् कलान्यसेत्
सौदामनी निभं भूतं तसंभूतं विद्यादेहं न्यसेच्छिवम् १५
ग्राचार्यपंचमुद्रेषु ग्रावाहनविधिं शृराु
गन्धमर्दन्यहस्तेषु तन्मध्ये प्रभृतं भ्रमत् १६
कह्लारैर्जातिसंयुक्तैः शतपत्रैश्च केतकी
इदं पुष्पं दळे ग्राह्य दक्षहस्ते तु विन्यसेत् १७

अन्तर्यागाकृतिं भाव्य कराग्रैरासनं त्रिषु
संहितां देहनेत्रेषु पुनर्जातिं न्यसेत्करैः १८
दक्षवामकरे भाव्य शान्तिः शिवसमाश्रितम्
कराग्रे संहिता देवं करादूर्ध्वे प्रजापतिम् १९
करमूले सुरा प्रोक्तं चन्द्रसूर्यस्य युग्मकम्
कलेश्वरं मंत्रमुच्चार्य प्रासादे मनसा स्मृतिम् २०
मूलादिब्रह्मरंध्रान्त सुषुम्नामध्यसंचितम्
तद्रूपमररूप्यन्तं तल्लकी सत्यमूर्धनि २१
तदूर्ध्वं क्षितिकाद्यन्त तत्संख्याममतत्वसु
तत्वरो मनसंध्येषु शुक्लशोणितमांसधृक् २२
भुवनं हृत्प्रदेशेषु संस्मरेद्व्यक्तसूक्ष्मसु
नृत्तानन्दं स्वथारूपं स्वस्वरूपमिति स्मृतम् २३
एकमेकं त्रिधा मंत्रं प्रासादे मंत्रमुच्चरन्
मूलादि ब्रह्मरन्ध्रेषु आवाह्यं हृत्प्रदेशकम् २४
स्थापनं संनिधानं च संनिरोधनमेव च
अवकुण्ठनपंचैते मुद्रेषु सृगयोनिषु २५
पाद्यमाचमनं चार्घ्यं हितामेकादशान्वितम्
धूपदीपं हृदा दत्वा अनन्तादीन् जनार्दन २६
अभ्यर्च्य गन्धपुष्पाद्यैः मुद्रान्तमुपचारकैः
युग्मं धूर्धूरसंगृह्य दक्षकर्णे तु वामधृक् २७
धूपदीपं शिवं दद्यात् आधारत्रयार्चयुक्
कीलागौरीन्यसेन्मूलं योनिमुद्रां प्रदर्शयेत् २८
खळीजेन समाश्रित्य अग्निबीजेन संयुतम्
श्यामळां द्विभुजां ध्यात्वा अर्चयेत्तादृशो मनुः २९
शंखदुन्दुभिनिर्घोषैः ब्राह्मणान्स्वस्तिवाचकैः
कृष्णगन्धे नमस्कृत्य गाळिकं शंभुमूर्धनि ३०
ललाटे कण्ठहृद्देशे बाहुकुक्षौ तथैव च
नाभौ पदद्वयं चैव गंगा चन्द्रेण वासुकिः ३१
पूर्वांगं लेपनं कृत्वा गन्धस्मरन्न्यसेद्द्विजः

हृदयं कण्ठमकुटे ललाटे विन्यसेच्छिवम्  ३२
आचार्येण सुसंगृह्य ललाटे तु विचक्षणः
महाहविर्निवेद्यं च पायसा पिष्टदं च युक्  ३३
फलेनाम्रफलादीनि नैवेद्यं सर्वघोषणैः
घण्टानादध्वनिं कृत्वा सशिवाय निवेदितम्  ३४
मुखवासनताम्बूलं धूपं दीपसमन्वितम्
नीराजनविधिं कृत्वा शास्त्रदृष्टेन कर्मणा  ३५
गोपुरे प्राग्दिशे दक्षे संग्रहेत्सप्तवास्तुकम्
सालोकं सदनं द्वन्द्वं समीपं संग्रहेद्विधिम्  ३६
सारूपेण द्विधं प्रोक्तं सायुज्यश्रुतिसंग्रहैः
ब्रह्मविष्णुत्रयं पश्चाद्धातुं संग्रहसामिपम्  ३७
सालोकं ब्रह्मवर्गेषु सामीपं विष्णुवर्गसु
सारूपं रुद्रयोगेषु सायुज्यं सर्वदाशिवम्  ३८
तत्तत्पादेन शुद्ध्यर्थं देवानां ऋषि संमृखम्
ब्रह्मविष्णुर्जनोः स्थानं सायुज्यं शतरुक् स्थितम्  ३९
हिरण्मयो गुहश्चैव रामो बाणसुरेष्वपि
रावणो भीमसेनेश रक्षार्थं गृहधातुकम्  ४०
सदाशिवमनन्तेषु श्रीकण्ठं च तथाम्बिकाम्
गृहं कृष्णं च धातारं गुरून्सप्तगृहस्थितम्  ४१
सर्ववाद्यसमोपेतं सौख्यसंघसुसेवितम्
प्रासादप्रदक्षिणं कृत्वा तदूर्ध्वे देशिकं स्थितम्  ४२
तुम्बुरुं मंत्रवत्कृत्वा पीठस्योर्ध्वे तु विन्यसेत्
भ्रमे सप्तगृहं चैव कूटशाला प्रभाकृतिम्  ४३
चित्रवस्त्रैरलंकृत्य लिकुबे दामलंकृतैः
धूपदीपं हृदा दत्वा रजान्श्रुतिप्लुतान्ददेत्  ४४
तत्तत्पादेन भक्तेषु रक्षार्थं धनकं शिवम्
अभिषिच्य विधिं स्नानं शुक्लवस्त्रेण वेष्टनम्  ४५
शुद्धमाल्यैस्तथापुष्पं दापयेत्तु नटेश्वरम्
नटेशभ्रमणं कृत्वा रम्यधामे प्रदक्षिणम्  ४६

प्रासादं नवधा प्रोक्तं भ्रामयेच्चित्रकूटकैः
सर्वावरणदेवानां रक्षार्थं तु प्रदक्षिणम् ४७
प्रभाते विधिवत्स्नात्वा कौतुकं तीर्थमेव च
नृत्तेश्वरमलंकृत्य पूर्ववत्कृष्णगन्धसु ४८
अभिमंत्र्य शताष्टौ तु पूर्ववद्दापयेच्छिवम्
नैवेद्यं दापयेत्पश्चाद् धूपदीपेन पूर्ववत् ४९
भक्तेभ्यो परिचारेभ्यो राष्ट्रेभ्यो विजयोदयम्
दापयेत्कृष्णगन्धं च नानाभक्तजनैस्सह ५०
पूर्ववत्कृष्णगन्धेन भक्तेभ्यो वर्जयेत्तदा
भक्तेभ्यः पूर्ववद्दाप्य पुनरुत्सवमाचरेत् ५१
शान्तिहोमं सहस्रेषु अधिवासनपूर्ववत्
पूर्ववत्कृष्णगन्धेन दापयेल्लास्यमीश्वरम् ५२
आचार्यस्सव्यभागेन पृष्ठभागे शिवद्विजः
शिवद्विजं लक्षणोपेतं शुद्धवस्त्रेण वेष्ठनम् ५३
आचार्यस्सशिवो रूपं शिवं द्विजं महेश्वरम्
आचार्यस्थितपद्मं वा रुचिरासनयोगधृक् ५४
देशिकं शक्तिसंप्रोक्तं देशिकात्मशिवं सदा
तुम्बुरुं मंत्रवत्कृत्वा चतुश्शतं चतुष्पदम् ५५
होतारश्शिष्यं संख्येन वर्जयेत्पीठधृक् स्थितम्
होतारश्शिष्यमारोप्य राजराष्ट्रं विनश्यति ५६
तद्ग्रामे कलहं प्रोक्तं परचक्राद्भयं नृपम्
आचार्यस्य सपुत्रैश्च शास्त्रदृष्टेन कर्मणा ५७
आरोप्य विधिवत्कृत्वा मस्त्रिपं विधिवर्जयेत्
अस्त्रिपं संभवेत्कृत्यं पद्मपत्रमिवांभसा ५८
अन्येषु होतृभिस्सर्वा वर्जयेत्तु जनार्दनः
आरोप्य कलशं प्रोक्तं शान्तिमूर्तिदिशां प्रति ५९
सहस्रकलशं स्नानमभिषेकमहाहविः
पूर्ववद्भ्रमणं कृत्वा ग्रामे वा नगरेऽपि वा ६०
प्राकारे वा रथे वापि फलके पीठमेव च

आस्थानमराटपे साद्य पृष्ठभागेन मद्दळैः ६१
मतंगवीणया नादं तन्नादं नवनादकम्
मद्दळे घटहे वापि झल्लरी मल्लरी तथा ६२
घोषयेद्भरते शास्त्रे भरतं नृत्तरूपकम्
पिष्टेन तैलसंयुक्तं नाळिकेरं निवेदयेत् ६३
भक्तेभ्यो परिचारेभ्यो घोषाद्यैर्जनसेवकैः
भस्म प्रसादसिद्ध्यर्थं संग्रहेद्द्विजसत्तमः ६४
स्नपनं पंचविंशत्या नैवेद्यं धूपदीपकम्
शिवोत्सवे च वैशाखे वसन्तोत्सवमेव च ६५
चन्द्रा व्रतेषु त्रिःकाले नटेशोत्सवमाचरेत्
आचार्यदक्षिणां दद्यात् गोभूहिरण्यदानकैः ६६
साम्राज्य संपदं प्राप्य सायुज्ये पदमाश्रितम्
नटेशसोत्सवं प्रोक्तं शक्त्युत्सवविधिं शृणु ६७
इति सहस्रतन्त्रे क्रियापादे नृत्तपंकोत्सवविधिपटलः ६

## शक्त्युत्सवविधिः

शक्त्युत्सवविधिं वक्ष्ये शृणुष्वेवं जनार्दन
ध्वजावरोहणे क्षेत्रे अंकुरार्पणमाचरेत् १
सोमस्कन्देश्वरो वापि वीरशक्तिं विशेषतः
नृत्तरूपस्य शक्तिं वा बन्धयेद्वामहस्तके २
नैवेद्यं धूपदीपं च अर्चयेत्परया हृदिम्
अपरे दिवसे स्नाप्य सायं कारैरलंकृतम् ३
होमयेत्पंचमूर्ति स्याच्छक्तयेत्पंचवक्त्रसु
होमयेत्पंचभिर्मंत्रैः आदिरूर्ध्वेन संपुटैः ४
होमयेत्पंचवक्त्रेषु पूजयेत्परमेश्वरीम्
देवदेवेश्वरोपेतं नैवेद्यं धूपदीपकैः ५
आलयं तु प्रदक्षिणयां सर्वघोषैरलंकृतम्
नानावाद्यसमोपेतं लोकरक्षार्थकारणम् ६
शक्तिं तत्पृष्ठभागेन सोमधारीन्दुशेखरम्

ग्रामप्रदक्षिणं कृत्वा ऐन्द्रे या देव सुस्थितम् ७
देवीनां क्रोधभावेषु तदूर्ध्वे वालयं गति
कवाटबन्धनं कृत्वा परया परमेश्वरीम् ८
सेवका नर्तका नर्ति गणिकाया समाश्रितम्
कदळीपत्रवद्दण्डे क्रीडितं विधिरुत्तमम् ९
चण्डेश्वरमलंकृत्य विज्ञाप्य देवदेवि युक्
कालेतत्वविधिं सर्वं रस्वमंत्रार्थतत्वकम् १०
वेदतंत्रार्थमीशानीं क्षमस्वामपराधयुक्
चिह्नवाद्यसमोपेतं ब्रह्मस्थाने यमाश्रितम् ११
आलयं तु प्रदक्षिण्यां शिवस्यैव प्रदक्षिणम्
भोगार्थकर्मकालेषु पृष्ठभागे सदाशिवम् १२
सर्वघोषसमोपेतं शंखकाहळवाद्यकैः
देवालयं समासाद्य नैवेद्यं धूपदीपकम् १३
आरात्रिकं त्रिधाभ्राम्य चण्डेशं प्रतिसरन्त्यजा
पुण्याहं प्रोक्षणं कृत्वा रक्षाबन्धनमेव च १४
अपरे दिवसे चैव भ्रामयेदालयं प्रति
आचार्यः मनसा प्रीति सायुज्येन पदं व्रजेत् १५
इति सहस्रतन्त्रे क्रियापादे शक्त्युत्सवविधिपटलस्तृतीयः १०

११
अथ वक्ष्ये विशेषेण मदनोत्सवविधिक्रमम्
सर्वपापहरं पुण्यं सर्वजन्तु सुखावहम् १
नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यमं शृणु
पंचाहं कन्यसं चैव मदनोत्सवविधिं गुहः २
चैत्रे फाल्गुनतन्मासे अन्यमासे विवर्जयेत्
चान्द्रपक्षं विशेषेण सौरपक्षं विवर्जयेत् ३
गणेश्वरं समभ्यर्च्य अस्त्रदेवं समर्चयेत्
चण्डेश्वरमलंकृत्य कुन्दाळी प्रोक्षणेष्वपि ४
मृत्संग्रहणं कृत्वा उद्याने नन्दने दिशे

अस्त्रमंत्रेण संप्रोक्ष्य अवगुण्ठ्य यथाविधि
नाना वाद्यसमोपेतं नानामंगळशब्दभिः ५
नानाघोषसमायुक्तं वितानध्वजसंयुतम्
उद्याने देवमासाद्य कुन्दपाटलिमूलके ६
बिल्वे कदम्बमूले च समालेपनमेव च
पुण्याहप्रोक्षणं कृत्वा भूशुद्धिं जलमेव च ७
दर्भैः पुष्पैः परिस्तीर्य तन्मध्ये रासनत्रयम्
आसनं पृथिवी चैव मूर्तिं तद्व्योममेव च ८
मूलं सदाशिवं तत्वं चिन्तयेद्देशिकोत्तमः
धूपदीपं च नैवेद्यं हृदयेन निवेदयेत् ९
कुन्दाळीमस्त्रमुद्धृत्य प्राङ्मुखो वाप्युदङ्मुखः
खात्वा मस्त्रेण मंत्रेण स्वर्णपात्रे विनिर्दिशेत् १०
क्षौमेन वाससाच्छाद्य स्थलिकोर्ध्वे न्यसेद्धृतिम्
धूपदीपं हृदा दत्वा नागोर्ध्वे वा शिरोर्ध्वके ११
आसनं पृथिवी चैव मूर्तिं तद्व्योममेव च
मूलं सदाशिवं तत्वं चिन्तयेद्देशिकोत्तमः १२
धूपदीपं च नैवेद्यं हृदयेन निवेदयेत्
कुन्दाळीमस्त्रमुद्धृत्य प्राङ्मुखो वाप्युदङ्मुखः १३
खात्वामस्त्रेण मंत्रेण स्वर्णपात्रे विनिर्दिशेत्
क्षौमेन वाससाच्छाद्य स्थलिकोर्ध्वे न्यसेद्धृतिम् १४
धूपदीपं हृदा दत्वा नाभोर्ध्वे वा शिरोर्ध्वके
आलयं तु प्रदक्षिण्यां सर्वघोषैरलंकृतम् १५
आलयं तु प्रविश्याथ ऐशान्यां स्थापयेन्मृदम्
ऐशान्ये पावके सौम्ये यागमण्टपवेशनम् १६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
नवाग्निं वाथ पंचाग्निं वर्जयेच्छिवमेव च १७
पंचाग्निं च नवाग्निं वा एकाग्निं वर्जयेत्सदा
मण्टपं चतुरश्रं च दर्पणोदरसंनिभम् १८
यागमण्टपमासाद्य दर्पणे च्छत्रचामरैः

कदळी दर्भमालेषु अलंकृत्य विशेषतः १९
अस्त्रहोमशतं हुत्वा पर्यग्निकरणानि च
वासोर्ध्वे विन्यसेद्व्रीहि तण्डुलैर्दळशोभितम् २०
द्वारकुंभेषु सर्वेषु सप्तविंशति संख्यया
वायुर्वरुणयोर्मध्ये अष्टद्रोणैश्च शालिभिः २१
दळाष्ठकसमोपेतं तन्मध्ये शिवकुम्भकम्
कर्करीयुग्मसंपूज्य मन्मथं कुम्भमध्यमे २२
रतीनां च वसन्तेन कर्करं पूजयेद्धृदा
सौम्ये पाशुपतं कुंभं भ्रामयेत्तु शिवाज्ञया २३
ज्ञानखड्गं समभ्यर्च्य शान्त्यादिद्वारमर्चयेत्
सूर्यश्चाग्निदिग्भागे उत्तरे पूजयेत्सदा २४
मण्टपे तण्डुलैश्चैव लेखयेद्दळमष्टसु
शिवकुंभं न्यसेन्मध्ये वर्धनीमीशदेशकैः २५
पूर्वादीशानपर्यन्तं भ्रामयेद्वसुकुम्भसु
चूताश्वत्थदलंकृत्य नववस्त्रेण रत्नधृक् २६
करन्यासविधिं कृत्वा श्रीकण्ठन्यासमेव च
अष्टत्रिंशत्कलोपेतं भूतशुध्यन्तरीयताम् २७
विशेषार्घ्यं संहितामंत्रैः धेनुमुद्रावगुण्ठयेत्
आधारशक्तिपर्यन्तं शिवांगन्देहविन्यसेत् २८
धूपदीपं तथा दद्यात् पाद्यमाचमनीयकम्
कर्करीं पूजयेद्गौरीं मकरेणस्य यथा विधि २९
अनन्ता दिशि खण्डयन्तं विन्यसेद्भ्रामयेद्धृदिम्
धूपदीपं हृदा दत्वा अग्निकार्यं विशेषतः ३०
यागध्वारे शुध्यर्थं चन्द्रशेखरयुग्मयुक्
आस्थाप्य देवदेवेशिमभिषेकं जनार्दन ३१
पूजयेच्छक्तिपर्यन्तं पंचावरणविन्यसेत्
त्रिपादं स्थलिके न्यस्य तण्डुलैः स्वर्णतन्तुकैः ३२
ताम्बूलं भस्म संयुक्तं अर्चयेद्धूपदीपकैः
बृहत्सामंत्रदेवेन त्र्यम्बके देविहस्तके ३३

बन्धयेद्धूपदीपं च होमकर्मदिनं प्रति
नैवेद्यं मुखवासं च यागदेवान्समर्पणम्  ३४
दिनं प्रति विशेषेण पूजाहोमसुमंत्रयुक्
प्रतिसरक्रमतीर्थान्तं यागद्वारे समाश्रितम्  ३५
धूपदीपं हृदा दत्वा लाजा श्रुतिप्लुतान्ददेत्
तीर्थत्रृक्ष तदूर्ध्वे च जलक्रीडां समाचरेत्  ३६
प्रासादाग्रेषु कर्तव्यं सौम्यमुत्तरमेव च
वारुण्यां वा यथा देशे तटाकं विन्यसेज्जलम्  ३७
नानादीपसमायुक्तं नानापक्षिसलंकृतम्
तत्र मध्ये प्रभां कृत्वा चतुस्तम्भसमन्वितम्  ३८
मुक्तादामैरलंकृत्य वितानच्छत्रचामरैः
चित्रकूटमलंकृत्य पुण्याहप्रोक्षणेषु च  ३९
ब्रह्माविष्णुश्च रुद्रश्च ईश्वरस्तम्भमेव च
आधारशक्तयेद्भक्त्या धूपदीपैरलंकृतम्  ४०
दर्भैः स किंशुको वृक्षैः अन्यथा वृक्षयेत्सहः
नवांशे करमायामे विस्ताराद्बन्धसंग्रहम्  ४१
देवालयं प्रविश्या च आलयं तु प्रदक्षिणम्
सायं काले विशेषेण देवदेवेश्वरं शिवम्  ४२
तटाके पश्चिमे भागे मण्टपं चतुरश्रकम्
धूपदीपं च मारात्रै नाळिकेरं निवेदयेत्  ४३
तत्र कुंभं समासाद्य तदूर्ध्वे विन्यसेच्छिवम्
जलमध्ये परिभ्राम्य अष्टविंशतितोत्तरे  ४४
तत्संख्य तत्र मंत्रार्थं सर्वप्राणिसुखावहम्
भ्रामयेन्नृत्तगीतेषु वाद्यगीतेषु मंत्रिभिः  ४५
चित्रकूटं समासाद्य अर्चयेद्देशिकोत्तमैः
अपूपेन फलैर्लाजैः नैवेद्यं मुखवासनम्  ४६
श्वेतताम्बूलकर्पूरैः उपचाराणि सर्वशः
नैवेद्यं चरुभूतेषु पंचवर्णेषु शुभ्रयुक्  ४७
उपदंशहविः प्रोक्तं वर्जयेच्चित्रवस्त्रकैः

पूर्वोक्तफलसंयुक्तं नैवेद्यमुत्तमं शिवम् ४८
वृक्षे वटन्तदूर्ध्वे तु पूर्ववद्विन्यसेच्छिवम्
चित्रकूटं तथा भ्राम्य पूर्ववन्मराटपेश्वरम् ४९
स्रालयं तु प्रदक्षिरायां यागद्वारे समाश्रितम्
स्नपनं नवकुम्भेषु स्नापयेत्पूर्ववत्क्रिया ५०
प्रतिसरं पूर्ववद्बध्वा यागस्थानेनमाश्रितम्
नृत्तमूर्तिमलंकृत्य स्नपनाद्यैर्विशेषतः ५१
प्रतिबिं बन्धयेत्पूर्वदेवदेवीं तथैव च
यक्षकर्दमलेपस्य यागाभ्यन्तरहोमसु ५२
शुध्यर्थं सहिते तुम्बुपूर्णासंहितं मुहुः
धूपदीपं हृदा दत्वा ब्राह्मणान्स्वस्तिवाचकैः ५३
नृत्तेश्वरमलंकृत्य चन्द्रशेखरमेवहम्
अलंकृत्यद्विधो रूपं नटेशं चन्द्रशेखरम् ५४
यागद्वारे समाश्रित्य नित्यकल्याणसुन्दरम्
अभ्यर्च्य विधिवत्कृत्वा शास्त्रदृष्टेन कर्मणा ५५
धूपदीपं हृदा प्रोक्तं दापयेत्कृष्णगन्धकम्
मूर्ध्नि चैव ललाटे च कराठे च हृदये न्यसेत् ५६
बाहुद्वयेषु सर्वांगं दापयेत्कृष्णगन्धकम्
सोमास्कन्देश्वरं दद्यात् मूर्ध्नि चैव ललाटके ५७
हृदये बाहुदेशेषु सदने कृष्णगन्धकम्
दापयेद्धूपदीपं च नैवेद्यं मूर्तियुग्मकम् ५८
महाहविर्निवेद्यं च उपचाराणि सर्वशः
हर्म्ये प्रदक्षिणोपेतं यागद्वारे स्थितेश्वरम् ५९
पाद्यमाचमनं चार्घ्यं लाजान्श्रुतिप्लुतान्ददेत्
हर्म्ये प्रदक्षिणं कृत्वा यथा स्थाने समाश्रितम् ६०
स्नपनं पंचविंशत्या नृत्तमूर्तिं सुपूजयेत्
स्नपनं नवकुम्भेषु अन्यरूपेश्वरं शिवम् ६१
स्नापयेद्देवदेवेशी पूजयेत्तु यथा विधि
प्रातःकाले प्रदक्षिरायां नृत्तमूर्तिर्न वर्जयेत् ६२

भ्रामयेद्वर्जितं नृत्तं पूर्वोक्तं चन्द्रशेखरम्
भ्रामयेत्तत्र देवेशं यागद्वारे समाश्रितम्  ६३
चूर्णोत्सवविधिं कृत्वा पालिकैर्मुसलैस्स्थितैः
तैलचूर्णं ददेन्मूर्ध्नि मूलबेरेषु सर्वशः  ६४
शंखदुन्दुभिनिर्घोषैः स्तोत्रमंगळवाचकैः
नानावाद्यसमोपेतं नानाघोषैरलंकृतैः  ६५
पिंछचामरसंयुक्तैः तालवृन्तध्वजान्वितैः
ग्रामप्रदक्षिणं कृत्वा वीथिवेदैश्चतुष्पदैः  ६६
तत्तद्गृहे च भक्ताद्यैः जलं पूर्णं हरिद्रयुक्
जनसंघै स्वचीहस्तैः भ्रामयेत्तु चतुष्पथे  ६७
नदीतीरे प्रपां कृत्वा स्थापयेत्परमेश्वरम्
अलंकृत्य शिवे विद्वान् प्रकारे तु प्रदक्षिणम्  ६८
पूर्णाहुतिं क्षिपेत्तत्र मूर्तिकुम्भशिवं यजेत्
अभिषिच्य महेशानं मूलदेवेश्वरं सदा  ६९
नैवेद्यं दापयेत्पश्चात् धूपदीपेन संयुतम्
आरात्रिकं परिभ्राम्य देशिकैर्दक्षिणैस्तथा  ७०
वस्त्रहेमांगुळीयुक्तं आचार्याय प्रदापयेत्
समीपेन पदे प्राप्य शिवलोके महीयते  ७१
साम्राज्य संपदं प्राप्य राजराष्ट्रं सुखावहम्
मदनोत्सवविधिं प्रोक्तं वसन्तोत्सवविधिं शृणु  ७२
इति पारमेश्वरक्रियापादे मदनोत्सवविधिदशमः पटलः  ११

१२

अथ वक्ष्ये विशेषेण वसन्तोत्सवविधिक्रमम्
सर्वव्याधिहरं पुण्यं सर्वजंतु प्रतिष्ठितम्  १
वैशाखे चान्द्रपक्षेण पर्वान्तं वा विशेषतः
नवाहं वा सप्ताहं पंचाहं वा विशेषतः  २
यागशालैरलंकृत्य रम्भादण्डेर्वितानकैः
पुष्पदामैरलंकृत्य पर्यग्निकरणादिषु  ३

अंकुरार्पणपर्ययेत्पूर्वं नैवेद्यं धूपमेव च
चन्द्रशेखररूपेण स्नापयेत्स्नपनान्वितम् ४
पुण्याहप्रोक्षणैर्युक्तं रक्षाबन्धनतत्क्रिया
देवस्य दक्षिणे हस्ते तद्देव्या वामहस्तके ५
धूपदीपं च नैवेद्यं यागपूजाविधिं शृणु
नन्द्यावर्तं च मन्दारैः जातिनीलोत्पलं द्वयम् ६
शतपत्रं च कह्लारैः वनमाला च बिल्वकी
सदाहृत्य शतो माल्यैः विचित्रकेसरान्वितैः ७
पुष्पदामैस्सुसंगृह्य यागमभ्यन्तरेष्वपि
वेदिकोर्ध्वे न्यसेच्छालीं लाजदर्भैश्च विष्ठरैः ८
पद्मेन दळसंलिख्य कर्णिकैस्समकर्णिकाम्
तन्मध्ये विन्यसेत्कुंभैः स्थापयेत्त्रयसंख्ययुक् ९
चतुष्कोणे प्राच्य दिग्भ्राम्ये कलशैर्बाणशोभितम्
चूताश्वत्थदळंकृत्य कूर्च्यविष्ठरशोभितैः १०
वस्त्ररत्नं सहेमैर्वा स्थापयेदभिधानकैः
सामान्यार्घ्यं सुसंकल्प्य परशु भ्रमितं तथा ११
पूजयेन्मध्यकुंभेषु मन्मथाय समर्पणम्
दक्षिणे कुंभमध्यं च वसन्तेन प्रपूजितम् १२
तदुत्तरे कुंभहृद्देशे मन्दमारुतविन्यसेत्
स्वशक्तिं भावयेन्मंत्रैः बुद्धिमान्देशिकोत्तमः १३
प्रणवादि नमोन्तञ्च स्वस्वनाम्नेषु पूजितैः
अभ्यर्च्य गन्धपुष्पाद्यैः धूपदीपं निवेदितम् १४
अग्निकार्यविधिं युक्तं होमयेद्रादिरध्वसु
सहस्रेणायुतेनैव अर्बुदं होमयेच्छिवम् १५
माल्यैश्च कुंभमादाय होमयेत्तु शतं क्रमात्
तत्तत्कुंभे सहस्रं वाभिमंत्र्यं सदाशिवम् १६
परिचारस्समुद्धृत्य प्रासादन्तु प्रदक्षिणम्
गर्भगृहं समासाद्य पुण्याहप्रोक्षणेष्वपि १७
धूपदीपेन संयुक्तं माल्यमादाय देशिकैः

लिंगमूर्ध्नि समासाद्य पिरिडकान्तं शिलान्तकम्  १८
शतार्धं लिंगपद्माख्यं तच्छेषं खराडलिंगसु
तुराडं लिंगे तु माच्छाद्य धूपदीपादि नृत्तकम्  १९
महाहविर्निवेद्यं च ताम्बूलं मुखवाससौ
पुष्पपूजाविधिं वक्ष्ये वसन्तोत्सवमाचरेत्  २०
उत्सवेश्वरं निवेद्येषु सौख्यसंघैश्च नृत्तयुक्
शान्तिहोमं ततः कृत्वा मद्दळैः शंखदुन्दुभैः  २१
चित्रदराडं त्रिधा ब्रह्म विष्णु मंत्रं सुपूजितम्
सृष्टिस्थितिनिमित्तेन दराडेन दराडखातयुक्  २२
तत्तद्दराडं समभ्यर्च्य धूपदीपस्य दर्शयेत्
गणिका सर्वत्र संवीक्षे प्रोक्षणैरस्त्रमंत्रकम्  २३
पंचसप्तनवोनार्यां द्वात्रिंशल्लक्षणैर्युताम्
दराडस्य दापयेद्दासीं गानयेत्क्रीडसंयुतम्  २४
वसन्तरागादिताळेषु वादयेद्गणिकैस्सह
ग्रामप्रदक्षिणं कृत्वा तत्तत्संधिदिशां प्रति  २५
प्राकारे तु प्रदक्षिरायां सायंकाले दिनं प्रति
चूर्णोत्सवविधिं कृत्वा प्रासादे तु प्रदक्षिणम्  २६
नदीतीरे तटाके च प्रभां कृत्वा विशेषतः
तटाकेदूर्ध्वमास्थाप्य तन्नवष्षोडशं करे  २७
आयव्ययं विधिं कृत्वा कदळीपनसाम्रकैः
दर्भमाल्यप्रसूनेषु पृथुरोवकहंसयुक्  २८
नानापक्षिमृगैः पुष्पैः स्थापयेद्यन्त्रमेव च
चित्रदीपेन संकल्प्य चिह्नमालाविभूषितम्  २९
अस्त्रदेवेश्वरं पूज्य स्नापयेत्परमेश्वरम्
क्रीडायां पंचशक्तिं च नवधातुन्ननर्म च  ३०
मुखे पंच त्ववच्छक्तिं वामादिनवशक्तियुक्
सप्तमातृश्च चराडीश्च दराडधारी भ्रमेऽनिलाः  ३१
पूर्ववद्वाद्यसंख्येषु यानयेरतिमीश्वरम्
देवालयं समासाद्य नैवेद्यं धूपदीपकैः  ३२

पायसापूपपक्वान्नैः नाळिकैरिक्षुखराडकैः
नैवेद्यं दापयेच्छंभोः स्रारात्रिकसमन्वितम् ३३
धूपदीपं हृदादत्वा ताम्बूलं मुखवासनैः
दर्पणं छत्रमारुत्त्यैश्च चामरैगीतनृत्तकैः ३४
प्रभूतप्रार्थयेद्विद्वान् दक्षिणां संप्रदाय च
वसन्तोत्सवविधिं प्रोक्तं पुष्योत्सवं विधिं शृणु ३५
इति सहस्रतन्त्रे क्रियापादे वसन्तोत्सवविधिरेकादशपटलः १२

१३
अथातस्संप्रवक्ष्यामि पुष्योत्सवविधिं क्रमम्
पुष्ये ऋृक्षे प्रपूर्णे च पुष्ययुक्तवियुक्तके १
तथैवमुत्सवं वक्ष्ये शृणुष्वैव जनार्दन
तीर्थऋृक्षं तदूर्ध्वे च अंकुरार्पणमाचरेत् २
स्नपनं पंचविंशत्या सोमस्कन्देश्वरास्त्रकैः
पुणयाहप्रोक्षयेद्विद्वान् स्थलिके स्थणिडले न्यसेत् ३
तत्सूत्रा स्वर्णसूत्रेण भस्म ताम्बूलसंयुतम्
बन्धयेद्देवदेवीनां त्र्यम्बकं कवचं मनुम् ४
धूपदीपं हृदा दत्वा ताम्बूलेन समन्वितम्
प्रातस्नात्वा शुचिर्भूत्वा सकळी करणं कुरु ५
प्रासादाग्रे तु कर्तव्यं उलूखलं मुसलं तथा
तन्मध्ये मणडलं कृत्वा दष्टद्रोणैश्च शालिभिः ६
दळाष्टकसमोपेतं तन्मध्ये लूखलं तथा
तदूर्ध्वे मुसलादूर्ध्वे सकूर्चं बन्धयेच्छिवम् ७
तत्र तत्पूर्वदिग्देशे स्थणिडलेस्येन्तुकं तथा
स्थलिकोर्ध्वे न्यसेत्तैलं दूर्वापुष्पाक्षतान्वितम् ८
तत्र पूर्वे दिशे धान्ये दळाष्ठसरसीरुहे
तन्मध्ये विन्यसेद्भेरीं ब्रह्मविष्णुहराधिपाः ९
शब्दतत्वस्य मा बाह्ये चन्द्रसूर्ये द्विदेशके
कीलाया सप्तमातृभ्यो रर्चयेद्धूपदीपकैः १०

लूखलं पृथिवीतत्वं मुसलं मेरुमारुतम्
हरिद्रं मात्मवत्सर्वंत्यं तत्सत्यच्छेदनं शिवम् ११
लूखले देहमित्युक्तं मुसलं देहमुच्यते
देहिदेहस्य सम्बन्धात् पुनर्देहं हरिद्रधृक् १२
धूपदीपं हृदा दत्वा रजतपात्रे विनिर्दिशेत्
कर्पूरै रोचना गन्धैः सहचूर्णी समिश्रितैः १३
धूपदीपं हृदा दत्वा दूर्वपुष्पाक्षतान्वितम्
मकुटे मूर्ध्निदेशे वा विन्यसेत्तैलदूर्वया १४
विन्यसेद्रजनीचूर्णं देवीनां तु तथैव च
भेरीमंत्रेण संप्रोक्ष्य प्रणवासनमूर्तिषु १५
प्रणवं चादितः कृत्वा मायया बिन्दुनादकम्
शब्दतत्वनवाच्येषु नमस्कारार्चने त्रिषु १६
शब्दतालविधिं घोष्यैः भक्तैश्च परिचारकैः
देशिकैर्दापयेत्तैलं रजनी लाजसेवकाः १७
प्राकारेण प्रदक्षिण्यां विघ्नेश्वरसहान्विताम्
पूर्ववत्प्रतिसरं बध्वा जलतीरे समाश्रितम् १८
कूटं वा मण्टपं वाथ द्वात्रिंशदायाममव्ययम्
वितानछत्ररम्भाद्यैः अलंकृत्य विशेषतः १९
तत्र मध्ये स्थितं पूज्य पुण्याहप्रोक्षणं तथा
देवता स्थाप्य सर्वत्र त्रिशूलेन समन्वितम् २०
स्नपनोक्तविधिं स्नाप्य पूजयेद्गन्धपुष्पकैः
तत्र मध्ये स्थितं पूज्य पुण्याहप्रोक्षणं तथा २१
देवताः स्थाप्य सर्वत्र निवेद्यं महाहविः
नैवेद्यं महाहविः प्रोक्तं गीतवाद्यं च नृत्तकम् २२
संध्याकाले प्रदक्षिण्यां मूलबेरालयस्थितम्
नाळिकेरफलोपेतं नैवेद्यं धूपमेव च २३
मूलबेरार्चनं कृत्वा पूर्वोक्तविधिना सह
आचार्यमनसा प्रीति प्रतिसंवत्सरक्रिया २४
पुष्योत्सवविधिं प्रोक्तं शिवोत्सवविधिं शृणु

इति सहस्रतन्त्रे क्रियापादे पुष्योत्सवविधिरेकादशः पटलः १३

१५

आषाढादित्रयोदश्यां अथ श्रावणभाद्रयोः
सितासित +++ श्चतुर्दश्यष्टमीषु चेत् १
अथातस्संप्रवक्ष्यामि तिलपूजाविधिक्रमम्
सर्वदोषहरं श्रेष्ठं सर्वसस्यविवर्धनम् २
श्रावणे चान्द्रमासं वा सौरमासं विवर्जयेत्
एकाहं वा द्वयाहं वा त्रयाहं वोक्तमान्वितम् ३
पूर्णान्तं श्रविष्ठसंयुक्तं अत्यन्तमतिदुर्लभम्
पर्वप्रधानसंयुग्मं कन्यसं मध्यमान्वितम् ४
ऐशान्ये सौम्यदेशे तु यागशालां प्रकल्पितम्
चतुर्द्वारसमायुक्तं महावेदीं प्रकल्पयेत् ५
पंचाग्निं च शिवाग्निं च कल्पयेत्कल्पवित्तमः
नवमं तलसंशोध्य क्षाळयेत्पंचसप्तभिः ६
भूतसंख्ये त्रयो युग्मे शिवद्रोणमथापि वा
धौतवस्त्रेण संमृज्य जङ्कैः पूरयेच्छनैः ७
विशेषपूजनं कृत्वा स्नपनं पंचविंशतिः
यागशालां प्रकल्प्याथ अष्टद्रोणेन शालिभिः ८
तिललाजैः परिस्तीर्य दर्भैः पुष्पैः परिस्तरेत्
तन्मध्ये नळिनं लिख्य पंचवर्णेन संयुतम् ९
पीतं शुक्लं तथाश्यामं रक्ताभं केसरप्रभम्
शिवकुम्भं तु वर्धन्या स्थापयेत्कर्करी सह १०
चूतपल्लवकूर्चाद्यैः गन्धतोयैः प्रपूरितम्
पंचरत्नानि वा तस्मिन् सुवर्णं वा सुवस्त्रकम् ११
वेदिकाग्निसु तन्मध्ये अष्टद्रोणैश्च शालिभिः
सरसी मध्यदेशे तु तिलेषु घटसुस्थितम् १२
अभिधान्यादिकं सर्वं कुंभे वा कर्करी सह
द्वारपूजां प्रकर्तव्यं शान्तिविद्या निवृत्तिकम् १३

प्रतिष्ठां भारतीं लक्ष्मीं गणेशं संप्रपूजयेत्
इन्द्रादिलोकपालानां नन्द्यादिवसुदैवतम्  १४
करन्यासादिकं कृत्वा भूतशुध्यादिमाचरेत्
विशेषार्घ्यं सुसंकल्प्यमन्तर्यागं समाचरेत्  १५
वेद्योर्ध्वे शिवकुंभं च आधाराख्यं सदाशिवम्
उमादेवं सुनेत्रांगैः पूजयेत्कुंभमध्यमे  १६
आसनादीनि शक्त्यन्तं कर्करी हृदये न्यसेत्
धूपदीपं हृदा दत्वा व्याप्यव्यापशिवान्तकम्  १७
शक्त्यन्तं शक्तिजालोर्ध्वे मूलं तच्छिवकुम्भकम्
पंचावरणमार्गेण नैवेद्यं धूपदीपकम्  १८
अग्निकुण्डं स्रुवान्तं च आज्यं चैव तु संग्रहेत्
संस्कारादिकं सर्वमाहुचक्रमतद्विधिः  १९
मुखे भूतहृदे षट्कं क्रममष्टोत्तरं हुनेत्
तिलकमर्चयेद्विद्वान् संहिताभिक्रियां न्यसेत्  २०
तत्तच्छद्धिविशेषेणास्त्रमंत्रशताहुतिः
संहितां पंचतत्वेषु अष्टमूर्तिं हुनेच्छतम्  २१
नैवेद्यं धूपदीपं च गन्धं वै मिश्रकं तिलम्
गन्धं कच्चोलसंमिश्रं कस्तूरीकुंकुमा सह  २२
तिलं सर्षपसंमिश्रं स्थलिकोर्ध्वे न्यसेत्तिलम्
तदूर्ध्वे सुगन्धिकं पुष्पं सकूर्चं वासनाधिकम्  २३
सद्यो जातेश्वरावाह्याद्युपचाराणि सर्वशः
शुध्यर्थं षोडशं चैव स्वाहा तन्मूलमंत्रकम्  २४
नैवेद्यं धूपदीपं च रात्रौ निद्रां विवर्जयेत्
प्रभाते पर्वकं स्नात्वा शुद्धवस्त्रोत्तरीयकम्  २५
पंचांगभूषणोपेतं स्वर्णपुष्पं शिरोर्ध्वजम्
यागद्वारे समागम्य पादप्रक्षाळपूर्वकम्  २६
अंगन्यासादिकं सर्वं भूतशुध्यादिमाचरेत्
यागदेवान्समभ्यर्च्य नैवेद्यं धूपदीपकम्  २७
परिचारांशुचिः स्नात्वा तच्छिरोर्ध्वे व्यवस्थितम्

प्रासादप्रदक्षिणं कृत्वा देवदेवं महेश्वरम् २८
पुण्याह प्रोक्षणं कृत्वा अर्चयेत्तु यथाविधि
पंचावरणमार्गेण अर्चनं मूलशम्भुना २९
शंखदुंदुभिनिर्घोषैः स्तोत्रमंगळवाचकैः
तिलमाचार्यसंपूज्य लिंगोर्ध्वे न्यासयेच्छिवम् ३०
आत्मविद्याशिवं तत्वं पिण्डिकान्तसृगादिभिः
सायान्तं तिलमीशोर्ध्वे गेयनृत्तादिजागरम् ३१
सहस्रकलशं स्नानमष्टोत्तरयथाविधि
सायाह्ने तिलमुद्ध्रस्य प्रोक्षयेच्छुद्धवारिणा ३२
शान्तिहोमं ततः कृत्वा पूर्णाहुतिमतः परम्
शिवकुम्भं तु वर्धन्यां प्राकारे तु प्रदक्षिणम् ३३
शिवकुम्भं न्यसेन्मूर्ध्नि अप्रवपिण्डिकान्वितम्
अभिषिच्य शिवो विद्वान् वस्त्रैराभरणान्वितम् ३४
नैवेद्यं धूपदीपं च आरात्रिकसमन्वितम्
नृत्तगीतादिसंतोष्य पूजयेत्सोमधारकैः ३५
आचार्य दक्षिणां दद्यात् वस्त्रहेमांगुळीयकैः
चण्डेश्वरं समभ्यर्च्य नैवेद्यधूपदीपकैः ३६
आयुरारोग्यमैश्वर्यं यशः कीर्तिविवर्धनम्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ३७
इति सहस्रतन्त्रे तिलपूजाविधिः त्रयोदशः पटलः १५

लाजपूजार्चनाविधिः १६

अथ वक्ष्ये विशेषेण लाजपूजाविधिक्रमम्
भ्राम्य वा पर्ययुक्ते च पौर्णमास्यां विशेषतः १
एकाहं शशिकाहं वा चन्द्रसंनिभलाजकैः
प्रासादाग्रे प्रकर्तव्यं मण्टपं चतुरश्रकम् २
मण्टपं चतुरश्रं च शालिपिष्टैर्महोत्पलैः
दळाग्रे पाटलं वर्णं तन्मध्ये गौरवृत्तकम् ३
आधाराख्यमनन्तं च रेखाग्रे तमालकम्

रेखाग्रे तमालकं वर्णं शेषवर्णं विवर्जयेत् ४
कुण्डे वा स्थण्डिले वापि शिवं श्रुत्यश्रमेव च
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ५
शालीपुरातनं कृत्वा पाकशाले संभवम्
पंचद्रोणैः शिवद्रोणैः लेखनद्रोणमेव च ६
चन्द्रसंनिभसंकाशं तुषकम्बुकवर्जयेत्
अन्यथा किलसंयुक्तं प्रस्तं च विवर्जयेत् ७
कुंभे वा कर्करी द्वापि पूरयेत्तु विचक्षणैः
मण्डलोर्ध्वे प्रतिष्ठाप्य सापिधानं सपुष्पकम् ८
चूतपल्लवकूर्चाद्यैः पुष्पमाल्यैर्विभूषितम्
पूर्वद्वारादिसंयुक्तमीशान्तं कलशे वसु ९
पाशुपतास्त्रकुम्भेन भ्रामयेदर्चनं त्रिधा
अंकुरार्ण्यर्पयेत्पूर्वं पुण्याहप्रोक्षणं तथा १०
यागान्तं संप्रविश्यां च यागवास्तु हुतं भवेत्
सूर्यादिलोकपालेभ्यो अर्चयेद्द्विजसत्तमाः ११
करन्यासादिकं सर्वं भूतशुध्यादिमाचरेत्
अन्तर्बहिर्न्यसेद्विद्वान् वासोर्ध्वे लिंगकुम्भकम् १२
प्रधानाख्यमनन्तं च धर्माद्यं च सदाशिवम्
नैवेद्यं धूपदीपं च उपचाराणि पंचसु १३
अग्निसंस्कारमार्गेण होमयेद्ब्रह्मपंचकम्
व्योमव्यपिषडूर्ध्वे च होमयेत्तु शिवाग्निकम् १४
नृत्तगीतादिवाद्यं च रात्रौ निद्रां विवर्जयेत्
प्रभाते विधिवत्स्नात्वा संध्या सर्वत्र पूजयेत् १५
प्रातर्मध्याह्नयुग्मं च प्रभातेरर्चनद्वयम्
मध्याह्ने मूर्तिहोमं तु परिचारकमूर्धनि १६
मूर्तिकुम्भं प्रतिष्ठाप्य कर्करी सह युग्मकम्
प्रासादप्रदक्षिणं कृत्वा वितानच्छत्रमंगलैः १७
नानावाद्यसमोपेतं नृत्तकागणिकादिभिः
आचार्यः शिष्यसंयुक्तैः द्विजैश्च स्वस्ति वाचकैः १८

प्रासादप्रदक्षिणं कृत्वा अस्त्रदेवं सहस्सगोः
गर्भगृहे प्रतिष्ठाप्य गव्यपंचामृतैः शिवम् १९
स्नापयेद्देवदेवेशं वस्त्रैराभरणादिभिः
अभ्यर्च्य गन्धपुष्पाद्यैः अलंकृत्य सदाशिवम् २०
कुम्भमुद्धृत्य शिरसा लिंगमूर्ध्नि विनिक्षिपेत्
कलाप्रासादतन्मंत्रं मंत्रसंहितमुच्चरेत् २१
कर्करी युग्मलाजं वा पिण्डिका वा तदुक्रिया
सेचयेत्पिण्डिकालिंगं आत्मविद्याशिवान्तकम् २२
धूपदीपं हृदादर्घ्यं जयशब्दादिमंगलैः
चन्द्रोदयान्तं धूपदीप धूममभीष्टकम् २३
शान्तिहोमं ततः कृत्वा पूर्णाहुतिमथाचरेत्
पूर्णान्तं पूर्णसंयोज्य सायरक्षां समाचरेत् २४
सायरक्षां च यः कृत्वा लिंगे सर्वत्र शोधनम्
स्नापयेत्पंचविंशत्या वस्त्रैराभरणैस्सह २५
नैवेद्यं धूपदीपं च मुखवाससमन्वितम्
आचार्यदक्षिणां दद्यात् सन्दुष्टिः शिवसृष्टिदम् २६
लाजपूजाविधिं प्रोक्तं भस्मपूजाविधिं शृणु
इति सहस्रतन्त्रे क्रियापादे लाजार्चनाविधिश्चतुर्दश पटलः १६

## भस्मपूजाविधिः १७

भस्म पूजाविधिं वक्ष्ये आश्वमासविधिक्रमम्
अश्विनीमासतत्सर्वं चान्द्रपक्षसमन्वितम् १
अन्यत्र शुक्लपक्षेण वर्जयेद्भूतिभूसदा
कपिलाया मयं ग्राह्य पद्मपत्रे तु धारयेत् २
एलालवंगकर्पूरबिल्वपत्रैश्च मर्दनम्
तत्पिण्डं शुष्कसंयुक्तं नित्याग्नौ वा सुदाहयेत् ३
शीतकं नवभाण्डेन तच्छोध्यं वा जलान्वितम्
पंचसप्तनवोपेतं क्षालयेच्छुद्धवारिणा ४
तद्भस्मरविबिम्बेन वस्त्रपूतेन भस्मना

शुद्धगण्डुकसंगृह्य वस्त्रपूतेन बन्धयेत् ५
संहिता मन्त्रसंयुक्तं केतकी बिल्वकीप्रसु
अभिधानं सभस्मं वा कल्पयेद्भस्ममुत्तमम् ६
अन्यभस्मं गृहीत्वा तु क्षाळयेत्पंचसप्तभिः
कलामंत्रहितामंत्रमभिमंत्र्य शतो वसु ७
अग्निहोतृहुतं भस्मं तद्भस्मं क्षाळयेद्वसु
अन्यथा वर्जयेद्भस्मं तद्भस्मं नरकं व्रजेत् ८
त्रिविधं भस्म संख्यातैः कल्पयेत्कल्पवित्तमः
अंकुरार्पयेत्पूर्वं यागशालां प्रविश्य च ९
ऐशान्ये सौम्यग्देशे वा यागमण्डपवेशनम्
षोडशस्तंभसंयुक्तं द्वादशस्तम्भसंयुतम् १०
शिवाग्निं वा सुविश्रं वा योनिपद्ममथापि वा
चतुरश्रं विशेषेण तन्मध्ये चित्रवेदिका ११
कलशैरष्टभिः कुर्यात् पूर्वादीशान्तदिक्स्थितम्
पर्यग्निकरणं कृत्वा परशुमभ्यर्च्यमेव च १२
भिक्षापात्रपदद्वन्द्वं योगपा[?]कसूत्रकम्
यागमध्ये प्रतिष्ठाप्य ऐश्वर्यं च महालयम् १३
सोमास्कन्देश्वरोपेतं रक्षाबन्धनमेव च
यागपूजाविधिं कृत्वा नन्द्यादिद्वारपालकैः १४
पादप्रक्षाळनं कृत्वा अर्चयेद्गन्धपुष्पकम्
भूतशुध्यादिकं कृत्वा वेद्यूर्ध्वे शालितण्डुलैः १५
दळाष्टसमोपेतं मध्ये वा भस्मकुम्भकम्
अभिमंत्र्यमघोरेण सहस्रार्धं तदर्धकम् १६
कुलिके विन्यसेद्भस्मं यात्रावह्निसमन्वितम्
वेदिमध्ये प्रतिष्ठाप्य लकुळीश्वरमर्चयेत् १७
संहिता मंत्रसंयुक्तं पंचावरणमार्गतः
धूपदीपं च नैवेद्यं ताम्बूलं छत्रचामरैः १८
होमकर्म समारभ्य पलाशोदुम्बरस्य च
अश्वत्थखादिरश्चैव श्वेतार्कं चण्डकं तथा १९

तिलसर्षपमुद्गं च माषशिं बाडमेव च
कुळस्थं गुळखराडं च इक्षुखराडैश्च पायसैः २०
लाजं वा श्वेतशालिं वा महाशालिं तथैव च
होमयेद्यागदेवस्य नैवेद्यं वा यथाविधि २१
नृत्तगीतं च वाद्यं च रात्रिशेषं विवर्जयेत्
प्रातः स्नानविधिं कृत्वा पादप्रक्षाळनं विधिः २२
यागपूजाविधिं कृत्वा पूर्वोक्तविधिरुत्तमम्
रजन्यारिन्दुजातं वा परिचारकमूर्धनि २३
प्रसादप्रदक्षिरां कृत्वा देवदेवस्य संनिधिम्
पुरायाहं वाचयित्वा तु विशेषपूजां समारभेत् २४
वस्त्राभरणगन्धाद्यैः माल्यामभ्यर्च्यमीश्वरम्
परिचारकसमुद्धृत्य लिंगमूर्ध्नि विनिर्दिशेत् २५
लिंगे सर्वं समुद्धूळ्य शेषं भस्मं विनिक्षिपेत्
प्रासादं संहितां चैव व्योमव्यापि दशाक्षरैः २६
पदाध्वा च कलाध्वा च मंत्राध्वा च सुवर्णयुक्
तत्वाध्वा भुवनतो लिंगं अर्चयेत्परमेश्वरम् २७
नैवेद्यं धूपदीपं च मुखवाससमन्वितम्
दिशाहोमं समूर्तिं च शान्तिहोमं समाचरेत् २८
लिंगे सर्वसमुत्पन्नं लयं तत्रैव चोच्यते
सोमास्कन्देश्वरोपेतं मूलबेराभिषेचनम् २९
नैवेद्यं धूपयुग्मं च आरात्रिकसमन्वितम्
वाद्यगीतं च नृत्तं च सौख्यं नृत्तं विशेषतः ३०
नानावाद्यसमोपेतं नानाघोषसमन्वितम्
सोमास्कन्देश्वरोपेतं आलयं तु प्रदक्षिणम् ३१
महाहविर्निवेद्यं च पूर्वस्थाने प्रतिष्ठितम्
निर्माल्यं भस्मसंगृह्य चराडेशाय निवेदयेत् ३२
तच्छेषं भस्म संगृह्य कावेरी मध्यसेचयेत्
आचार्यमनसा प्रीतिरायुरारोग्यवर्धनम् ३३
प्रतिसंवत्सरं कृत्वा भस्म पूजामिहोच्यते

साम्राज्यसंपदं प्राप्य पूजादोषनिवारणम्  ३४
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इति सहस्रतंत्रे क्रियापादे भस्मपूजा विधि पंचदशपटलः १७

अथातस्संप्रवक्ष्यामि दीपपूजाविधिक्रमम्
सर्वपापहरं पुण्यं सर्वात्मज्ञेयसिद्धिदम्  १
कार्तिके कृत्तिका ऋृक्षे पर्वं तद्दिनमेव च
प्रासादाग्रे शिवाग्रे वा मण्टपं चतुरश्रकम्  २
शिवाग्निं कल्पयेद्विद्वान् मध्ये वेदिं प्रतिष्ठितम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्  ३
मंगळांकुरसंयुक्तं पालिकाघटिकात्रयम्
शिवकुंभं तु मध्ये च ऐशान्ये कर्करी द्वयम्  ४
कर्करीं पूरयेद्विद्वान् चूतपल्लवालं कृतैः
नाळिकेरसुवस्त्रं च दर्भकूर्चसमन्वितम्  ५
सोमास्कन्दायमूर्तिं च विद्यादेहं न्यसेत्ततः
आदिशक्तिसमोपेतं बिन्दुनादसमन्वितम्  ६
सोमाय उतितः पश्चान्नमश्चैव चतुर्थकम्
आदिशक्तिसमो मायामादिशक्तिसमन्वितम्  ७
षडंगानि च वर्णानि आदिशक्तिसमन्वितम्
आवाहिन्या हृदा वाह्यार्चयेद्धूपदीपकम्  ८
नैवेद्यं द्रव्यसंयुक्तं पायसेन समश्रितम्
दिशादिसौम्यपर्यन्तं द्वादशं पक्षमेव च  ९
शिवाग्निं यागमाश्रित्य पिष्टचूर्णैर्जलोदितम्
दीपपात्रं प्रतिष्ठाप्य गोळकाशतवस्वकम्  १०
तन्मध्ये सहस्रवर्तित्वं गोळका वर्तिसंयुतम्
सूर्यपूजां समभ्यर्च्य वेद्योर्ध्वे शालितण्डुलैः  ११
सहस्रकमलं लेख्य पीतकृष्णासृगादिभिः
रक्तं कृष्णं तथा श्यामं सर्वत्र दळविस्तरम्  १२
तन्मध्ये पिष्टपात्रं च स्थापयेच्छिवसंनिधिम्

होमकर्म समाचम्य होमद्रव्यादिसर्पिषैः १३
तिलसर्षपमुद्गं च माषशिंबाडकानि तु
कुलुध्वस्थं यवलाजं च आहुतिं चरुसंपुटैः १४
सहस्रं वा तदर्थं वा तदर्थं वार्धमेव वा
पंचब्रह्मषडंगैश्च होमयेद्द्रव्यसर्वकान् १५
पिष्टपात्रमलंकृत्य स्नापयेत्परमेश्वरम्
वस्त्रैराभरणैर्माल्यैः गन्धपुष्पस्य धूपकैः १६
आधाराख्यमनन्तं च सदाशिवान्तमहाव्रतैः
सदाशिवं न्यसेल्लिंगे अग्निसर्वत्र रूपकम् १७
अभ्यर्च्य गन्धपुष्पाद्यैः मूलबेरं महेशकम्
पिष्टपात्रविधिं कृत्वा वासोर्ध्वे वह्निरूपयुक् १८
वन्यादित्रयमभ्यर्च्य आधारे शेषमर्चयेत्
गोघृतेन हृदिं पूर्णं प्रळयं पृथ्विपात्रकम् १९
दीपं संपूज्य हृन्मंत्रैर्वास्वादिक्पूर्वमादिकम्
मध्ये प्रळयपानीयं शिवाग्निं वर्तितं हविः २०
सर्वत्र दीपसंयोज्य नैवेद्यं धूपदीपकम्
ब्राह्मणान्स्वस्तिवाचेभ्यः तद्दीपं भ्रामयेत्त्रिधा २१
गर्भगृहं समासाद्य तद्दीपं भ्रामयेत्त्रिधा
आत्मविद्याशिवैस्तत्वैः भ्रामयेल्लिंगमूर्धनि २२
परिचारकमुद्धृत्य प्रासादं तु प्रदक्षिणम्
ईन्द्रपावकयोर्मध्ये स्थापयेद्वह्नियोजयेत् २३
महाहविर्निवेद्याथ लाजं वा व्रीहिसंमितम्
मरीचिसरसं चैव केळीफलगुरण्यम् २४
इक्ष्वाम्रफलादींश्च अपूपं वा समाश्रितम्
नैवेद्यं धूपदीपं च कर्पूरेण समन्वितम् २५
दीपावळिक्रमं पश्चात् कृत्तिका तन्त्रमार्गकम्
सर्वत्र दीपसंयोज्य तन्त्रोक्तं वा यथा विधि २६
नैवेद्यं दापयेत्पश्चाद् आचार्येण समन्वितम्
ब्राह्मणेभ्यो महाभक्तैः शिवयोगी च भक्तकैः २७

नैवेद्यं दापयेत्पश्चात्तदूर्ध्वे तंत्रकृत्तिका
आचार्यमनसा प्रीतिष्षोडश स्नपनं तथा २८
पंचगव्यामृते भूतरसभूतशिवार्चनम्
नैवेद्यं धूपदीपं च अर्धयाममिहोच्यते २९
अर्धयामक्रमं प्रोक्तं शृणुष्वेवं जनार्दन
गौरवस्त्रैरलंकृत्य सद्यादिरर्चयेत्तथा ३०
पिण्डिकां पादुकं पूज्याधारत्रयमेव च
संहितादीनि शक्त्यन्तं सदाशिवं मण्डलं तथा ३१
अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यं तु यथाक्रमम्
अपूपपायसौ युग्ममिक्षुखण्डरसादिभिः ३२
नैवेद्यं मुखवासं च ताम्बूलं चोपचारकैः
शिबिकादीनलंकृत्य द्वाराग्रे संमुखस्थितम् ३३
पादुकस्थाप्यमुद्धृत्य वेदघोषैरलंकृतम्
शिबिकां स्थाप्य तत्पादुं पौराणिकविशेषतः ३४
नृत्तगीतं च वाद्यं च रुद्रकीर्त्यन्तमेव च
झल्लिका मद्दळोपेतं शंखचिह्नसमन्वितम् ३५
पटहः करटी चैव कांस्य काहलदुन्दुभिः
पूर्वे चैव तु गान्धारमाग्नेय्यां कोल्लिमेव च ३६
कौशिकं याम्यदेशे तु नैर्ऋत्यां न□भाषयः
पाशौ श्रीकामरं प्रोक्तं वायौ तत्केशिमेव च ३७
सोमे तु तक्करागं स्यात् ऐशान्यां पंचमं भवेत्
ब्रह्माणि खड्गधारिण्यां खेटकौमारिहस्तकम् ३८
पुष्पमालासहस्रं च लक्ष्मी सैव्यवामकौ
वाराही च महेशानि तन्त्री नादसदाशिवम् ३९
वाराही चित्रधारिण्यां चामुण्डी शषकं तथा
इन्द्रारी पादुधारिण्यां कौमारीं तालवृन्तकम् ४०
वामादीनि तु शक्त्यां वा नवतीर्थेन सेचनम्
पंचावरणदेवेषु तत्तद्वन्दनं सेव्यकम् ४१
धूम्रि तु धूपधारिण्यां दुर्गायां धूपधारिणीम्

विघ्नस्कन्दसमायुक्तं सर्वदेव्यां नमस्कृतैः ४२
भोगशक्त्यालयं गत्वा पाद्यमाचमनार्घ्यकम्
विन्यस्य पादुकं चैव रथच्छंदनमूर्ध्वजम् ४३
अष्टपुष्पं हृदा दत्वा नाळिकेरनिवेदितम्
शक्त्यर्चनविधिं कृत्वा आधाराख्यमनन्तकम् ४४
रतिप्रीत्यामनोशक्ति पीठाग्रे अर्चनं सुधीः
ब्रह्मान्तं शताष्टदेवीं च आचार्यन्तु समर्चयेत् ४५
अपूपादि फलं चैव देवीनां तु निवेदितम्
नैवेद्यं धूपदीपं च मुखवाससमन्वितम् ४६
नृत्तगीतं तथा वाद्यं गानयेद्देवसंनिधौ
पाद्यमाचमनं चार्घ्यं पराङ्मुखार्घ्यं क्षमस्वतः ४७
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी
तावदत्र त्वया देवी स्थातप्यमिहमन्दिरे ४८
एवं विज्ञाप्य चैशानीं कवाटं बन्धयेत्समम्
घण्टायामघोषेण घृतस्नानविधिं शृणु ४९
कृत्तिकोत्सवदीपं च व्रतं वै घृतकम्बळम् ५०
इति सहस्रतंत्रे क्रियापादे दीपार्चनविधिषोडशः पटलः १८

१९

अथातस्संप्रवक्ष्यामि घृतकम्बलविधिक्रमम्
सर्वकिल्बिषशान्त्यर्थं सर्वशान्तिकरं शुभम् १
सर्वमंगळरक्षार्थं सर्वाभीष्टफलप्रदम्
मार्गशीर्षकमासे तु शुक्लपक्षे चतुर्दशी २
पर्वलब्धकसंयुक्तं पर्वं वा पूजयेच्छिवम्
प्रासादाग्रे चतुर्द्वारं मण्टपं चतुरश्रकम् ३
शिवाग्निं वाथ पंचाग्निं एकाग्निं वा विशेषतः
कपिलायां वाथ गोमध्ये घृतं वै रुत्तमद्वयम् ४
पंच सा+ वसोयुग्मं सद्रोणैराज्यसंग्रहम्
तत्तद्द्रोणैस्समं पात्रं सौवर्णं राजतं तु वा ५

श्रेणियो वा सवस्त्रं वा पिशिन्यो वाथ कन्यसम्
अंकुराण्यर्पयेत्पूर्वं धूपदीपसमन्वितम् ६
यागारंभप्रवेशं च अर्चना विधिना शृणु
मध्ये वेदी पदं कृत्वा शालितण्डुललाजकैः ७
दर्भैः पुष्पैः परिस्तीर्य कर्णिकैः कलशोभितैः
मध्ये घृतं प्रतिष्ठाप्य आदिभूतमत्रर्चयेत् ८
गृहस्थैर्देशिकाद्यैश्च स्नानमंत्रजपादिभिः
पादप्रक्षाळनं कृत्वा आचम्य विधिरुत्तमम् ९
करन्यासादिकं सर्वं भूतशुध्यन्तरीयकम्
द्वारपूजाविधिं कृत्वा शान्त्यादितनिवृत्ति च १०
परशुपातेन शास्त्रेण भ्रामयेत्खड्गसंयुतैः
उभयासनं संकल्प्य नैवेद्यं धूपदीपकम् ११
वेदिका दक्षिणे पार्श्वे आचार्यान्तरीकृतम्
विशेषार्घ्यं हितामंत्रैः रक्षानैर्गन्धपुष्पकैः १२
षट्त्रिंशत्तत्वसंयुक्तं आत्मविद्याशिवं तथा
सदाशिवस्य शक्त्यन्तं अर्चयेद्धृतमध्यमे १३
सवस्त्रं सापिधानं च परया पटलं तथा
होमकर्म समारभ्य वक्त्रिकी करणं तथा १४
वक्त्रसंधानमार्गेणाभिघारं हुनेत्सुधीः
कम्बले तु षडध्वं च न्यसेद्विद्वान्प्रतिष्ठितम् १५
घृतपात्रं हृदि मध्ये न्यसेत्षष्ठयुतन्मनुम्
मूर्तिहोमं हुनेदेकं स्वरयुतं शान्तिमेव च १६
तृतीयं युग्मसंयुक्तमाहुनेच्चसहस्रकैः
नैवेद्यं धूपदीपं च त्रिकोणोदरसंपुटम् १७
परिचारकं समुद्धृत्य प्रासादं तु प्रदक्षिणम्
ब्राह्मणान्स्वस्ति वाचेभ्यो त्र्यम्बकेन शिवद्विजैः १८
पुण्याह प्रोक्षणं कृत्वा अष्टोत्तरसहस्रकम्
गव्यपंचामृतैर्युक्तं फलोदकसमन्वितम्
गंधोदकेन गंधेन उष्णशीतळमेव च

शीतळैरुपकारेभ्यो पिष्टौ वा रजनी द्वयम्
सेचयेत् गंधसंयुक्तं बेरवैरर्चनं शुभम् १९
पंचावरणमार्गेण अर्चयेद्धूपदीपकम्
घृतकम्बळमुद्धृत्य लिंगमूर्धनि सेचयेत् २०
कंबळैर्लिंगमाच्छाद्य पीठं वै घृतमर्दनम्
व्योमव्यापि न्यसेत्कुंभं व्योमव्यापि दशाक्षरम् २१
अध्वन्यासे कलान्यासे अष्टत्रिंशत्कला न्यसेत्
धूपदीपफलं चैव मर्दनं तु निवेदितम् २२
गव्यपंचामृतैर्वापि कंबलैश्च सपर्यया
अभ्यर्च्य पिष्टे रजन्यां वा कदळीफलसंयुतम् २३
शुद्धोदकेन संस्नाप्य रुष्णशीतळमेव च
गन्धकर्पूरसंयुक्तं कुंकुमैरोचनैः शिवम् २४
चतुश्चत्वारि संयुक्तं स्नपनं वा यथोदितम्
सुस्नाप्य देवदेवाय विशेषार्घ्याभिषेचनम् २५
उद्धृत्य धौतवस्त्राद्यैः गन्धमाल्यैरभूषणैः
अभ्यर्च्य गन्धपुष्पाद्यैः आसनावरणादिभिः २६
धूपधूमन्निरोधं च नैवेद्यं च गुळस्य च
ताम्बूलं मुखवासं च दर्पणच्छत्रचामरैः २७
मारुतं अन्यथा युक्तं दर्शनं स शिवप्रियम्
कालोपचारमार्गेण चण्डयागं समाचरेत् २८
अग्निसंस्कारमेवोक्तं चण्डमंत्रं शताहुतिः
कंबलं छादयेद्धुत्वा चण्डदेवस्य संनिधौ २९
जयादिरभ्याधानाय राष्ट्रभृत्तेन होमयेत्
पूर्णाहुतिं समभ्यर्च्य चण्डमंत्रेण होमयेत् ३०
धूपदीपं च नैवेद्यं चण्डेशाय निवेदयेत्
यागमण्टपमासाद्य शान्तिहोमं हिता हुनेत् ३१
वह्निदेवं समुद्वास्य शिवमूर्तौ निवेदयेत्
प्रतिसंवत्सरं कृत्वा घृतकंबळमाचरेत् ३२
आचार्यं दक्षिणं दद्यात् वस्त्रहेमांगुळीयकैः

प्रासादप्रदक्षिणां कृत्वा चन्द्रशेखरमेव च  ३३
ग्रामप्रदक्षिणं वाथ नानावाद्यसमन्वितम्
नानागीतसुन्द्रक्ताद्यैः नाना भस्म जनैस्सह  ३४
देवालयं समासाद्य नाळिकेरफलैस्सह
पूर्णाहुतिं समभ्यर्च्य चण्डमन्त्रेण होमयेत्
नैवेद्यं धूपदीपं च उपचाराणि सर्वशः  ३५
राजोपचारमार्गेण पूजयेदुत्सवेश्वरम्
प्रतिसंवत्सरं कुर्यात् शिवलोके महीयते  ३६
इति सहस्रतंत्रे क्रियापादे घृतकंबळविधिः षोडशपटलः  १९

२०
अथातस्संप्रवक्ष्यामि घृताभिषेकविधिं शृणु
एकान्ते निर्जने स्थाने क्षौद्रे वा पूरयेद्घटे  १
सर्पिषो युग्मभेदं च पूजयेच्छषकं तथा
सेचनभ्रमणोपेतं नवनीतनवस्तथा  २
पूरयेत्तु चतुर्द्रोणपंचषट्सप्ततस्तथा
पूर्वे वा दक्षिणे वापि स्थापयेद्यागमण्टपम्  ३
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
शिवाग्निं वाथ पंचाग्निं शक्तिकुण्डस्वसंख्यया  ४
वेदिका मध्यदेशेषु व्रीहितण्डुललाजकैः
वसुर्दळसमायुक्तं मध्ये वा कुंभकर्करी  ५
चूतपल्लवकूर्चाद्यैः सवस्त्रं सापिधानकैः
सरत्नं वा सहेमं वा अर्चयेत्परमेश्वरम्  ६
परशुरूपेण वर्णेन ध्यानयेत्कुम्भमध्यमे
ज्ञानखड्गं सवस्त्रं च पूजयेत्सौम्यदेशके  ७
यागं त्रिधा परिभ्राम्य शासनद्वयमर्चयेत्
वैदिकामध्यदेशेषु विशेषार्घ्यसमन्वितम्  ८
पूजयेद्गन्धपुष्पाद्यैः शिवास्त्रं कुम्भमध्यमे
कर्करी सह वान्येन अर्चयेद्दिशि दिग्भवेत्  ९

नैवेद्यं धूपदीपं च होमकर्म समाचरेत्
कुराडमराडकवेद्यासु अ्रष्टद्रोणैश्च शालिभिः १०
तन्मध्ये स्थरिडलं कृत्वा श्वेताब्जे वर्णभूतकम्
लेखयेत्तु विचित्रेण तन्मध्ये घृतपात्रकम् ११
लाजपिष्टरसैर्दर्भैः विस्तरेद्बुद्धिमान्नरैः
अ्रन्यादि होम योग्यानि चरुलाजैश्च संयुतैः १२
होमयेद्ब्रह्मषट्कैश्च होमयेदाहुतित्रयम्
घृतमध्ये न्यसेत्कूर्चं सपुष्पं धूपकद्वयम् १३
संहितेन समभ्यर्च्य घृतमध्ये सुपूजयेत्
नैवेद्यं धूपदीपं च नृत्तगीतसमन्वितम् १४
रात्रिशेषं परित्यज्य स्थापयेत्प्रत्युषोदयम्
पूर्ववत्पूजनं कृत्वा नैवेद्यधूपदीपकैः १५
शान्तिमूर्तिदिशाहोमं पूर्णान्तं सौम्यवत्क्रिया
परिचारक उद्धृत्य प्रासादे तु प्रदक्षिणम् १६
अ्ररिष्टगृहमलंकृत्य स्थापयेद्धृतमूर्तकम्
पुरायाहं वाचयित्वा तु स्नपनं पंचविंशतिः १७
अ्रभिषिच्य शिवे विद्वान् अ्रर्चयेद्धूपदीपकैः
घृतपात्रं समुद्धृत्य लिंगमूर्धनिवेशयेत् १८
षडध्वन्यासमार्गेण स्नपनमुष्णशीतळैः
गव्यपंचामृतोपेतं स्नपनं पंचविंशतिः १९
यागस्थं कुंभमुद्धृत्य अ्रभिषेकं सदाशिवम्
विसृज्य धौतवस्त्रेण लिंगपीठशिलान्वितम् २०
वस्त्राभरणमाल्यैश्च पूजयेत्परमेश्वरम्
महाहविर्निवेद्यं च ताम्बूलं चैव सर्वशः २१
प्रदोषे नीराजनं कृत्वा दर्पणच्छत्रचामरैः
गीतनृत्तैस्तथावाद्यैः स्तोत्रमंगळदुन्दुभिः २२
अ्राचार्यश्शिष्यसंतुष्टैरुपचाराणि सर्वशः
धनुर्मासेऽथवा पुष्ये पुरायमासे तु कंबलम् २३
धनुर्लब्धकपर्वंवा तद्दिनं घृतसेचनम्

घृतस्नानविधिः प्रोक्तं मधुपर्कविधिं शृणु २४
इति पूर्वसहस्रे संहितायां प्रतिष्ठातंत्रे क्रिया पादे
घृतस्नानविधिसप्तदशपटलः २०

## मधुस्नानविधिः २१

अथार्चनविधिं वक्ष्ये मधुमत्पार्थिवं रजः
मधुस्नानसमं पुण्यं मधुवाधारिकायते १
मधु पूज्यक्रिया प्रोक्तं तच्छ्रेष्ठं च जनार्दन
ईश्वर उवाच
पुष्यमासि प्रपुष्ये वा पर्वयुक्तं विधीयते २
पुष्ययुक्तमयुक्तं वा पर्वयुक्तं विशेषतः
पूर्वे वा दक्षिणे वापि ऐशान्ये यागमण्टपम् ३
चतुस्तंभसमायुक्तं चतुस्तोरणभूषितम्
चतुर्द्वारसमायुक्तं मंगळांकुरमेव च ४
यागशाला प्रकर्तव्यं चतुरश्रसमन्वितम्
वेदीचतुष्पदं कृत्वा अष्टद्रोणैश्च शालिभिः ५
तिलतण्डुलसंयुक्तं परिध्यै वास्तु दर्भकैः
वसुर्दळसमायुक्तं तन्मध्ये मधुपात्रकम् ६
चतुस्संस्कारमार्गेण धूपदीपं विधानकम्
पंचसप्तचतुर्द्रोणैर्व्योमद्रोणेन पूरितम् ७
प्रतिष्ठाप्य यथाप्रोक्तं खड्गद्वादशमंत्रितम्
धूपदीपं हृदा दत्वा षट्त्रिंशत्तत्वहृन्न्यसेत् ८
सुधायां वाह्य हृन्मंत्रैः संहितायाभिमंत्रयेत्
भूमौ पाशुतं प्रोक्तं द्वारपूजादिनित्यवत् ९
कुण्डसंस्कारपूर्वं तु होमयेत्संहिता मनुः
तिललाजं समिद्द्रव्यैः इक्षुदण्डेन संयुतम् १०
दधिमधुघृतैर्युक्तं होमयेत्तु सहस्रकम्
तिलेन होमयेद्द्रव्यैः तिलतैलेन होमयेत् ११
घृतं वामेन मन्त्रेण द्रव्यन्तु पुरुषेण तु

समिदीशानमन्त्रेण चरुं वै घोरमेव च
सद्येन सर्वसु द्रव्यैः होमयेत्तु पृथक्पृथक् ११
द्रव्यान्ते शूलमंत्रेण किं तु तत्वत्रयान्वितम्
होमयेत्पंचमूर्तिं च पूर्णान्तं स्रुक्स्रुवान्वितम् १२
यवप्रमाणधारेण होमयेदादिपंचकम्
दर्भैर्लाजैश्च पुष्पैश्च वा उद्भवमुद्रयान्वितम् १३
अग्ने ऊर्ध्वे त्रिधा भाम्य तद्रूपमधु हृन्न्यसेत्
नैवेद्यं धूपदीपं च मधुरूपं महेश्वरम् १४
प्रणवं चादितः कृत्वा मायाबीजेन संयुतम्
मधुमाहेश्वराये च स्वाहान्तं मंत्रमुच्यते १५
अष्टोत्तरशतं हुत्वा परिचारकमूर्धनि
फलासनं समभ्यर्च्य तदूर्ध्वे मधुपात्रकम् १६
छत्रचामरसंयुक्तं पिंछकाहळसंयुतम्
भेरीमद्दळचिह्नं च करटीकिमलं तथा १७
खण्डभेरीमहाघोषं घण्टानादसमन्वितम्
धवळौ वामहस्तं च अंसताळं समन्वितम् १८
नृत्तकावाद्यगीतं च वीणायां नादघोषकैः
त्रिशूलेन समायुक्तं प्रासादे तु प्रदक्षिणम् १९
सूतिकागृहमासाद्य स्थलिकोर्ध्वे न्यसेन्मधुः
धूपदीपौ हृदा दत्वा ब्राह्मणान्स्वस्तिवाचकैः २०
मूलबेरं समभ्यर्च्य पंचगव्यामृतैस्सह
स्नापयेद्देवदेवेशं वस्त्रैराभरणादिभिः २१
पंचोपचारमार्गेण धूपदीपादिभिर्यजेत्
घृतपात्रमनुस्मृत्य मुद्धृत्य शिवसंनिधिम् २२
आचार्यं परिदृश्यन्ते लिंगमूर्धाभिषेचयेत्
दक्षिकूर्चकसंयुक्तं पिण्डिकाग्रे न्यसेच्छिवम् २३
वामे मध्यगतं स्वर्णं गोमुखाग्रे प्रतिष्ठितम्
धूपदीपं हृदा दत्वा ताम्बूलेन समन्वितम् २४
नृत्तगीतं च वाद्यं च घोषयेत्पंचनाडिका

परित्याज्य विशेषार्घ्यं स्नापयेत्परमेश्वरम्  २५
गव्यपंचामृतोपेतं सलिलं नाळिकेरकम्
संहिता मंत्रसंयुक्तं शान्तिपंचकरुद्रयुक्  २६
धौतवस्त्रेण संमृज्य वस्त्रैराभरणान्वितम्
गन्धमाल्युपवीतं च अष्टपुष्पेण संयुतम्  २७
पंचावरणमभ्यर्च्य पूजयेत्तदनन्तरम्
नैवेद्यं महाहविः प्रोक्तं ताम्बूलं भक्ष्यपानकम्  २८
धूपदीपं हृदा दत्वा मुखवाससमन्वितम्
ताम्बूलं धूपदीपं च आरात्रिकसमन्वितम्  २९
प्रदोषहविषं दत्वा नीराजनविधिं शृणु  ३०
इति सहस्रतन्त्रे क्रियापादे मधुस्नानविधिरष्टादशपटलः  २१

## गन्धपूजाविधिः  २२

गन्धपूजाविधिं वक्ष्ये शृणुष्वेवं जनार्दन
माघमासि मघयुक्त पर्वणि गन्धमर्चनम्  १
विशेषपूजनं कृत्वा देवदेवं त्रियम्बकम्
प्रासादाग्रे प्रकर्तव्यं कर्तव्यं यागमण्टपम्  २
शिवाग्निं वाथ कर्तव्यं तन्मध्ये मण्टपं शिवम्
अंकुराण्यर्पयेत्पूर्वं अभ्यर्च्य विधिसंयुतम्  ३
सप्तबीजेन संयुक्तं लाजपुष्पसमन्वितम्
नैवेद्यं धूपसंयुक्तं सप्तबीजेन संयुतम्
यागाधिपासनं कृत्वा अष्टद्रोणैश्च शालिभिः  ४
दळाष्टकसमोपेतं लाजतण्डुलदर्भकम्
ऐशान्ये पाशुपतं चैव भ्रामयेल्लोकपालकैः  ५
नित्यवद्द्वारपालेभ्यः शिवसूर्यं समर्चयेत्
कुंकुमारोचनैर्युक्तं कर्पूरेण समन्वितम्  ६
सेचनं मृगमदोपेतमेकभागसमन्वितम्
त्रिभागं चन्दनोपेतं भीमसेचनमर्दनम्  ७
सौवर्णं राजतं पात्रं तन्मध्ये शिवद्रोणयुक्

दर्भकूर्चसमोपेतं वेदिमध्ये स्थितः स्थितम् ८
सुगन्धपुष्पवद्गन्धं गन्धाग्रे पूरयेत्सुधीः
गन्धलिंगं समभ्यर्च्य धूपदीपसमन्वितम् ९
षडध्वं पूर्वकञ्चैव पूजयेत्सर्वतत्वकम्
अग्निकार्यं ततः कृत्वा पंचसंस्कारमेव च १०
अग्न्याधानादिकं सर्वं सर्प्यादितिललाजकम्
व्रीहिमाषकुळुत्थं च तण्डुलैर्गुळसंयुतम् ११
इक्षुदण्डेन वा तस्मिन्नपूपेन समन्वितम्
चरूणां च सुगन्धेन चन्दनेन हुनेच्छतम् १२
अग्निस्थदेवं संयोज्य गन्धलिंगस्य मध्यमे
धूपदीपं च नैवेद्यं नृत्तगीतं च वाद्यकम् १३
विघ्नेश्वरार्चनम् कृत्वा लड्डुकं पायसान्वितम्
संध्याग्रे अभिषेकं च मूलस्थं देवमीश्वरम् १४
अष्टोत्तरशतस्थानमभिषेकं जनार्दन
धौतवस्त्रेण संमृज्य जपावस्त्रेण वेष्टितम् १५
सुगन्धपुष्पं संदद्याल्लिंगमूर्ध्नि विशेषतः
फलं निवेद्य देवाय धूपदीपादिभिः शिवम् १६
पुण्याहं वाचयित्वा तु प्रोक्षयेच्छुद्धवारिणा
ब्राह्मणान्स्वस्ति वाचभ्यो श्रीरुद्रेण समन्वितम् १७
गन्धलिंगार्चनं कृत्वा सदाशिवान्तमर्चयेत्
धूपयुग्मं हृदा दत्वा परिचारकमूर्धनि १८
वाहयित्वाथचोद्धृत्य लिंगमूर्ध्नि प्रतिष्ठितम्
अर्घ्योदबिन्दुसंयुक्तं मर्दयेद् ज्ञानदृक् क्रिया १९
गन्धमर्दनमीशस्य रुद्ररूपं नरेश्वरम्
मल्लिकैः कुसुमैर्माल्यैः जातिचम्पकमाल्यकैः २०
वर्जयेदाभरादीनि आभरणं च वर्जयेत्
पंचावरणपन्थानं अर्चयेल्लिंगमूर्धनि २१
वज्राधाभरणादीनिराभरणञ्च वर्जयेत्
नैवेद्यं धूपदीपं च मुखवाससमन्वितम्

आरात्रिकसमोपेतं सौख्यं नृत्तविशेषतः २२
नृत्तान्ते व्याहृतिं हुत्वा शान्तिमूर्तिदिशा हुनेत्
पूर्णाहुतिं समभ्यर्च्य वह्निदेवं नमस्कृतम् २३
अन्तर्बलिविधिं कृत्वा लाजदर्भैः परिग्रहेत्
उद्भवं मुद्रयोपेतं वह्निदेवस्य संपुटम् २४
मूललिंगे नियोज्याथ धूपदीपसमन्वितम्
षोडशस्नपनोपेतं षोडशस्वरसंयुतम् २५
पंचगव्यं प्रतिष्ठाप्य पूजयेन्मूलशंभुना
अर्धयामविधिं सर्वं क्षेत्रपालान्तमर्चयेत् २६
आचार्येण प्रकर्तव्यं पंचसप्तं च निष्कम्
एवं धूपविधिं ज्ञेयं दीपं चैव समन्वितम् २७
प्रतिसंवत्सरं कृत्वा मासपूजेन संयुतम्
साम्राज्य संपदं प्राप्य सायुज्येन शिवं यजेत् २८
गन्धपूजाविधिं प्रोक्तं दमनं शृणु विष्ठरम् २९
इति सहस्रतन्त्रे क्रियापादे गन्धपूजाविधिरेकोनविंशतिपटलः २२

२३
अथ वक्ष्ये विशेषेण चैत्रको दमनक्रियाम्
सर्वपापहरं श्रेष्ठं सर्वविघ्नविनाशनम् १
पूजा किल्बिषशान्त्यर्थं रवितन्त्रोत्सवक्रियाम्
मेषपूर्णौ सुनक्षत्रे दमनं विधितः शृणु २
प्रासादाग्रे तु कर्तव्यं कल्पितं यागमण्टपम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ३
शिवाग्निं वाथ पंचाग्निमेकाग्निं वा विशेषतः
शिवमण्टपतन्मध्ये कल्पितं तारकप्रभम् ४
मंगळांकुरसंयुक्त पयोषधिसमन्वितम्
नैवेद्यं धूपदीपं च सद्यादीनां विशेषतः ५
विघ्नेश्वरं समभ्यर्च्य माल्यवस्त्रैरलंकृतैः
अस्त्रदेवं समभ्यर्च्य यथा देशे वनान्तयुक् ६

भूतशुद्धिं पुराकृत्वा कुन्दाळिं स्थलिकार्चयेत्
दान्तमूले विशेषेण अपरे मृद्विवर्जयेत् ७
दान्तमूले समभ्यर्च्य हृन्मंत्रेण विचक्षणैः
धूपदीपफले वेद्य हृन्मंत्रेण जनार्दन ८
खात्वा खड्गेन मुद्ग्राह्य स्थलिकोर्ध्वे न्यसेत्क्षितम्
तदूर्ध्वे च त्रिधाबन्धं दमनस्थाप्यमेव च ९
नैवेद्यं धूपदीपं च नागोर्ध्वे वा शिरोर्ध्वके
आलयं तु परिभ्राम्य यागस्थाने समाश्रितम् १०
मंगळांकुरसंयुक्तं अंकुरं तत्र मञ्चकम्
द्वारस्थाने समाश्रित्य यागवास्तुं हुनेच्छतम् ११
पर्यग्निकरणं कृत्वा पूजयेद्यागमण्टपम्
शान्तिभूतिबलारोग्यं तोरणानि प्रपूजयेत् १२
मण्डले स्थण्डिलं कृत्वा तिललाजावकीर्णतम्
दळाष्टकसमोपेतं तन्मध्ये स्थापितं शिवम् १३
ऐशान्ये वा मनोन्मन्या तत्पूर्वे देशिकः स्थितम्
आप्यदामकसंप्रोक्ष्य विसृज्य शुद्धवस्त्रकैः १४
सौवर्णं राजतं पात्रं तन्मध्ये तु न्यसेद्गुरुम्
कुंभस्य पूर्वमाश्रित्य दानं वस्त्रेण संमितम् १५
पाशुपतेन चास्त्रेण अभिमंत्र्य शताष्टकम्
पूजयेत्कुंभसंपाद्य आधाराख्यमनन्तकम् १६
आसनं मूर्तिमभ्यर्च्य विद्यादेहं समूलकम्
अभ्यर्च्य गन्धपुष्पाद्यैः ऐशान्ये परया तथा १७
अभ्यर्च्य धूपनैवेद्यं होमकर्म समाचरेत्
अलालवंगकर्पूरकुंकुमं रोचनान्वितम् १८
दमनकेन सुसंमृज्य पूर्वमेतत्प्रतिष्ठितम्
अंगेनैव हिता चैव मन्त्राणां खड्गसंपुटम् १९
होमयेत्पंचविंशत्यं शुध्यर्थं दमनं तथा
मूलेनैव घृतं हुत्वा शतमष्टोत्तरं हुनेत् २०
पूर्णाहुतिं समभ्यर्च्य परिचारे शुचिस्मृतम्

तस्योर्ध्वे तु न्यसेद्विद्वान् प्रासादेन प्रदक्षिणम्  २१
गर्भगृहं समासाद्य पुण्याहं प्रोक्षणं तथा
ओषधीशोदये चैव लिंगमूर्ध्नि समाश्रितम्  २२
आदिरीशानमंत्रोर्ध्वां ईशमन्त्रं विनिक्षिपेत्
अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यं तु फलैस्सह  २३
मुखवासनमेवोक्तं ताम्बूलं धूपदीपकैः
कालोपचारमार्गेण पूजयेत्परध्वजैः  २४
नृत्तगीतं तथा वाद्यं रात्रिशेषं तु जागरम्
सहस्रकलशैर्युक्तं गव्यपंचामृतं तथा  २५
स्नापयेत्थं मुखोपेतं दमनकं दापयेत् ध्वनीम्
महाहविर्निवेद्यं च सोमास्कन्देश्वरं तथा  २६
आधाराख्यमनन्तं च विद्यादेहं शिवान्तकम्
विद्येश्वरेणमादीन् सदाशिवान्तं च सर्वशः  २७
अभ्यर्च्य गन्धपुष्पाद्यैः अक्षतैर्मण्डितं तथा
नैवेद्यं धूपदीपं च आरात्रिकसमन्वितम्  २८
नानागीतं तथा वाद्यं नृत्तं तत्सौख्यमेव च
ग्रामप्रदक्षिणं कृत्वा प्रासादे वा प्रदक्षिणम्  २९
शान्तिहोमशतं हुत्वा यात्राहोमं हृदान्वितम्
स्वस्वतत्वाधिपाः शंभु प्रतिसंवत्सरं क्रिया  ३०
देशिकः शिष्यसंयुक्तं प्रीत्यर्थं पंचनिष्ककम्
वस्त्रहेमांगुलीयुक्तं आचार्याय प्रदापयेत्  ३१
दमनोत्सवविधिं प्रोक्तं अन्नपूजाविधिं शृणु
आयुरारोग्यमैश्वर्यं धनपाशं समाश्रितम्  ३२
इति सहस्रतंत्रे क्रियापादे दमनोत्सवविधिर्विंशतिः पटलः  २३

## अन्नपूजाविधिः २४

अन्नपूजाविधिं वक्ष्ये शृणुष्वेवं जनार्दन
वैशाखे च कलापूर्णे विशाखान्तं चर्क्षकैः  १
संपूज्य देवदेवेशं पूजयेज्जलबेरकैः

नित्यं नैमित्तिकं कृत्वा श्वेतशाली विवर्जयेत् २
रक्तशालिमहाशाली तण्डुलान्तोरकप्रभम्
वेदभूतरसद्रोणैः शिवद्रोणैस्तथा पुनः ३
तुषनिर्मलतत्तुल्यं संगृहेन्नवगण्डुकैः
ऐशान्ये पावके देशे तत्पूर्वे यागवेष्टनम् ४
पंक्तिभूतनवो हस्तं विधितं शिवसंयुतम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ५
शिवाग्निं वाथ कर्तव्यं तन्मध्ये मण्टपं श्रुतिम्
तदूर्ध्वे लेखनोपेतं चतुरनंगुलमेखलैः ६
तदर्थविवर्धनं कृत्वा त्रयश्रं खण्डमेखलम्
पिप्पलं नाभिदेशे तु मण्डपोर्ध्वं न्यसेद्बुधः ७
पूर्वे वा पश्चिमे वापि श्रुत्यश्रं तु प्रतिष्ठितम्
दर्पणोदरसंकाशं कुण्डमण्डलवेदिकाम् ८
सौवर्णं राजतं वापि कांस्य गड्डुकमन्यथा
वर्जयेत्तण्डुलैस्संख्या क्षीरं तत्संख्यान्वितम् ९
तटाके कूपदेशे वा तटिनी ऊर्ध्वमेव च
नालिकेरदळोपेतं मण्डपं चतुरश्रकम् १०
पूर्वोक्ततण्डुलैस्संख्यैश्चतुर्द्वारसमन्वितम्
जगत्संख्यातु तं मध्ये संस्कारेण विशेषतः ११
विशेषपूजनं कृत्वा मूललिंगे समर्पितम्
अन्नलिंगेषु सर्वेषु सर्वजन्तु प्रतिष्ठितम् १२
शिवश्शक्तिर्महादेव स्थातव्यं लिंगमूर्धनि
एवं विज्ञाप्य सर्वेषां मूलबेरे विशेषतः १३
सदनं खड्गसंप्रोक्ष्य ब्रह्मविष्णुहराधिपाः
दृक्क्रियासहसैर्युक्तमस्त्रदेवं समर्चयेत् १४
नैवेद्यं धूपदीपं च उपचाराणि सर्वशः
अस्त्रयागविधिं कृत्वा मण्टपं यागवेशनम् १५
पर्यग्निकरणं कृत्वा सर्वद्रव्यं समन्वितम्
ताळकाहळशंखाद्यैः गीतनृत्तादिघोषणम् १६

जनभक्तेषु सर्वेषां तत्संख्या तण्डुलैस्सह
छत्रचामरधूपाद्यैः अस्त्रदेवं सुसेवितम् १७
पूर्ववद्देशवाद्यादि जलतीरे समाश्रितम्
पुण्याहप्रोक्षणं कृत्वा अष्टद्रोणैश्च शालिभिः १८
तिलतण्डुलसर्वेषां स्थाप्य युग्मं सदेशिकम्
दळाष्टकसमोपेतं अस्त्रदेवं सुसह्यकम् १९
स्नपनं नवकुम्भेषु अभ्यर्च्य पूर्ववद्बुधैः
प्राक्शिरं शाययेदस्त्रं तत्काले स्नपनान्वितम् २०
सप्तधा पंचधा प्लाव्यं तन्नामं पूर्ण एव च
ईश्वरीयेषु सर्वेषां नमस्काराद्यं मायया २१
अभ्यर्च्य गन्धपुष्पाद्यैः अस्त्रदेवसुरार्चितम्
धूपदीपं हृदा दत्वा देवालयसमाश्रितम् २२
यागशालामलंकृत्य पर्यग्निं होमकर्मणि
वेदिकोर्ध्वे न्यसेच्छालीं कुण्डे वास हि लोमयेत् २३
दळाष्टकसमोपेतं कुम्भैः पावकदीशयुक्
नैर्ऋत्यौ स्थापयेद्विद्वान् द्वारकुंभे दिशां प्रति २४
स्वस्वकुम्भेष्वमीशान्तं लोकेशं ब्रह्मविष्णुकैः
तदूर्ध्वे परशुं पूज्य भ्रामयेदस्त्रमंत्रकैः २५
घटे विंशत्सु सर्वत्र गळितं चूतदर्भयुक्
अभिधानं च सर्वेषां वस्त्राद्यैरुपचारकम् २६
अंकुरार्पणमेवोक्तं पालिकाघटिकात्रयम्
सप्तधा पंचधा द्रव्यैः क्षाळयेद्वा तु पंचवत् २७
पयसा प्लाव्य बीजेन सत्यकृत्योऽभिमंत्रितः
अंकुराण्यर्पयेद्विद्वान् पुण्याहं प्रोक्षणं तथा २८
तत्पुरोदंकुरो पूज्य वर्जयेद्यागमूर्तियुक्
नैवेद्यं धूपदीपं च मुखवाससमन्वितम् २९
अस्त्रपूजार्चनं कृत्वा पुनस्त्रिभिरितिस्तथा
सामान्यर्घ्यं च संकल्प्य प्रोक्षणं द्रव्यसंयुतम् ३०
शान्त्यातीतं प्रतिष्ठान्तं द्वारकुम्भे सुपूजितम्

इन्द्र ईशानयोर्मध्ये निवृत्तिं पूजयेत्सदा ३१
इन्द्रादीशानपर्यन्तं लोकेशमर्चयेत्सुधीः
निवृत्तिरीश्वरो मध्ये ब्रह्माणं नैर्ऋते हरिम् ३२
धूपदीपं हृदा दत्वा न्यासकर्म समाश्रितम्
भूतशुध्यन्तरी कृत्वा ललाटे चन्दनाक्षतैः ३३
विशेषार्घ्यं त्रिधा कृत्वा पूजयेदक्षतान्वितम्
गन्धपुष्पं सुसंगृह्य अर्चयेद्देशिकोत्तमः ३४
ईशमीशानदिग्भागे पावके पुरुषेश्वरम्
अघोरं वह्निकुण्डेषु वामदेवं समीरितम् ३५
राक्षसे सद्यदेवेशं पूजयेत्पंचवक्त्रकैः
अभ्यर्च्य गन्धपुष्पाद्यैः धूपदीपं यथा हविः ३६
नैवेद्यं होमकर्म च पंचसंस्कारमेव च
होमकर्म समारभ्य द्रव्यं नवस्तथा चरुम् ३७
समिल्लाजसमोपेतं घृतमस्सोहसंपुटैः
अधिवासनमेवोक्तं कुम्भवक्त्रे च पंचकैः ३८
धूपदीपं तथा भ्राम्य कुण्डमध्ये तु संमितम्
संस्कारविधिवत्प्रोक्तं समित्काष्ठैर्विशुध्यतम् ३९
गड्डुकं पंचधा प्रोक्ष्य क्षाळयेत्सप्तधान्वितम्
द्रोणं तण्डुलतन्मध्ये न्यासयेदस्त्रसंमनुम् ४०
कपिला क्षीरसंमिश्रं तदर्थं पूरितं हृदि
शिवाग्निं वह्निमुद्धृत्य कुण्डमध्ये क्षिपेद्बुधः ४१
अघोरेण सुमंत्रेण वह्निबाडवमर्चयेत्
बाडवोनकमभ्यर्च्य शिरसेनमघोरकैः ४२
ज्वालाय ज्वलितं काष्ठं खदिरं कर्णकं तथा
त्रिमेखलसमोपेतं ब्रह्माद्यं सशिवाकृतिम् ४३
अभ्यर्च्य पंचभूतस्थास्तदूर्ध्वे पाकशासनैः
विन्यसेत्संहृदि भावो तदूर्ध्वे शक्तिरन्नयुक् ४४
अपरे तण्डुलं कृत्वा दक्षिणे पाकमेव च
स्थालीपाकं विधिं कृत्वा उपदंशैर्विशेषकैः ४५

पनसः कर्करी रराडं बृहती नववल्लरी
कारवल्ली पृथक्पाकैः मरीचि जीरकान्वितैः ४६
विशेषसंगृहेत्पूर्वे स्थापयेदमृतार्णवैः
स्थालीपाके चरुं ग्राह्य होमयेत्तु दशाहुतिः ४७
यागदेवं निवेद्यं च होमशेषं हविस्तथा
तच्छेषमादिपक्वान्नं सर्वघोषैरलंकृतम् ४८
प्रासादप्रदक्षिणं कृत्वा छत्रचामरसंयुतम्
स्नपनं पंचविंशत्या मूलकुम्भं समर्चयेत् ४९
गर्भगृहं समासाद्य पुरायाहप्रोक्षणं तथा
पंचावरणमार्गेण अर्चयेत्परमेश्वरम् ५०
स्थालीपाकविधिद्रव्यैः तच्छेषं तु निवेदितम्
धूपदीपं हृदा दत्वा उपचाराणि सर्वशः ५१
पश्चात्प्राधान्य हन्त्यन्यं स्वर्णपात्रे प्रपूरितम्
पूर्वोक्तमंत्रवत्कृत्वा धूपदीपैस्समर्पितम् ५२
तत्पात्रं संग्रहो मूर्ध्नि लिंगपीठस्सुमर्दनम्
नाडीयुग्मपरे स्नाप्य पूर्ववत्पूजयेच्छिवम् ५३
यागदेवान्विसृज्याथ कुंभस्य युगमेव च
अभिषेकं समर्प्याथ विशेषार्घ्यं सुपूजितम् ५४
वस्त्रैराभरणैर्माल्यैः गन्धपुष्पाक्षतान्वितम्
महाहविर्निवेद्यं च मुखवाससमन्वितम् ५५
ताम्बूलं धूपदीपं च आरात्रिकसमन्वितम्
सौख्यनृत्तविधिं कृत्वा उपचाराणि सर्वशः ५६
मंत्रं विना क्रिया नास्ति तन्त्रं नास्ति विनेश्वर
सर्वं क्षमस्व देवेश चिन्तितं स्वेच्छयान्वितम् ५७
इति विज्ञाप्य तल्लिंगं सदाख्यं तु जनार्दन
आचार्यमनसा प्रीतिः प्रतिसंवत्सरं क्रिया ५८
अन्नपूजाविधिः प्रोक्तं फलपूजाविधिं शृणु ५९
इति सहस्रतन्त्रे क्रियापादे अन्नपूजा विधिरेकविंशतिपटलः २४

## फलपूजाविधिः २५

फलपूजाविधिं वक्ष्ये सर्वप्राणिसुखावहम्
फलपूजा समं श्रेष्ठं सद्यः फलसुखावहम् १
मिथुने शुक्रमासे वा मूलभान्तस्य संपुटम्
पर्वयुक्तमयुक्तं वा पर्वान्तं फलपूजनम् २
एकाहं वा त्र्याहं वा फलोद्यान सलेपनम्
कदळीपनसोपेतं नाळिकेरफलान्वितम् ३
पुण्याह प्रोक्षणं कृत्वा तन्मूले तन्तु बंधनम्
परिचारः शुचिस्नात्वा शुद्धवस्त्रोत्तरीयकः ४
शटालुं संग्रहेत्सर्वं प्रासादाग्रे प्रतिष्ठितम्
चतुस्तंभसमोपेतं दर्भमाला विभूषितम् ५
मुक्तादामैरलंकृत्य शिवाग्निं कल्पयेद्दिशि
मण्टपञ्चतुरश्रञ्च दर्पणोदरसन्निभम् ६
अंकुराण्यर्पयेद्विद्वान् स्नपनं पञ्चविंशतिम्
पुस्तकं पूजयेत् विद्वान् स्थलिकोर्ध्वे शिरोर्ध्वके ७
लिंगस्थं सन्निधि स्थाप्य नैवेद्यं धूपदीपकम्
विज्ञाप्य देवदेवेशं मद्भक्त्यामुत्सवक्रिया ८
तत्सर्वं मन्त्रतन्त्रत्वं देवतानिर्मिताधिपम्
त्वत्सर्वं जन्तु वृक्षत्वं तत्सदृशं लिंगमर्दनम् ९
एवं विज्ञाप्य देवेशं सर्वप्राणि सुखावहम्
यागाधिवासनं कृत्वा पर्यग्निकरणानि च १०
पुण्याहप्रोक्षणं कृत्वा अष्टद्रोणैश्च शालिभिः
सलक्षणसमोपेतं ऊर्ध्वपद्मं नवो दळम् ११
तद्दळन्नवतो लिख्य तत्पदं चतुर्दळं
व्रीहि तण्डुलसंयुक्तं दर्भविष्टरशोभितम् १२
शिवकुंभं न्यसेन्मध्ये चूतपल्लवकूर्चकम्
तत्पूर्वे विन्यसेद्द्रव्यं अमृतमुत्तरे दिशि ११
भूतोदकस्य तक्षेत्रं मृतभूतं ततो दिशि
त्रिफलं तत्र संकल्प्य गन्धपुष्पाक्षतान्वितम् १२

सुप्रतिष्ठासुशान्तस्य तेजोरत्नं चतुर्दिशि
अमृतं मद्ध्यमे कुंभं अर्चयेत्पंचतत्वकम् १३
पंचमूर्तिं समभ्यर्च्य होमयेत्तत्प्रतिश्शतम्
एकवक्त्रं त्रिणेत्रं च शुद्धस्फटिकनिर्मलम् १४
अकाराक्षरतन्मध्ये ज्ञेयरूपं सदाशिवम्
एवं ध्यात्वा तु तन्मध्ये कुंभदेवं समर्चयेत् १५
ईशानं मध्यमे कुंभे तद्रव्यं पुरुषं तथा
अघोरमंजनप्रख्यं अमृतं वामदेवकम् १६
फले सद्यं तथा देवं तन्मंत्रं होमकर्मणि
अधिवासविधिं कृत्वा प्रासादे तु प्रदक्षिणम् १७
कन्याणसौन्दरं कृत्वा पूजयेद्वाममंत्रयुक्
षडंगेन शिखाभूतं संपुटं द्विजसत्तमः १८
अभ्यर्च्य गन्धपुष्पाद्यैः धूपदीपसमन्वितम्
रक्षाबन्धनमेवोक्तं पुण्याहप्रोक्षणं तथा १९
देवस्य दक्षिणे हस्ते देवीनां वामहस्तके
बन्धयेद्विश्वमंत्रं च रक्षणं धूपदीपकम् २०
विशेषस्नपनं कृत्वा मूलबेरेश्वरं शिवम्
शंखदुन्दुभिनिर्घोषैः स्थापितं फलमुद्धृतम् २१
मर्दनं फलसंमूर्ध्नि पंचनाडिकमर्दनम्
गव्यपंचामृतोपेतं सलिलं स्नापयेच्छिवम् २२
अभिषेकविधिः प्रोक्तं गोशृंगाग्रप्रमाणतः
अभिषिच्य पदाध्वा च सहस्राक्षरसंयुतम् २३
शान्तिहोमं ततः कृत्वा तत्कर्म मूर्ध्नि संयुतम्
प्रासादान्तं प्रदक्षिण्यां सर्वघोषैरलंकृतम् २४
पुण्याहप्रोक्षणं कृत्वा अभिषेकं सदाशिवम्
धौतवस्त्रेण संमृज्य लिंगपिण्डिकसंयुतम् २५
चित्रवस्त्रैरलंकृत्य पुष्पमाल्यैस्सहेलकम्
सुगन्धं निर्मितं लिंगं गंगाचन्द्रविभूषणम् २६
अलंकृत्य सदालिंगं उपवीतं सदाशिवम्

पंचावरणमार्गेण धूपदीपं सदाशिवम् २७
नैवेद्यं धूपदीपं च मुखवाससमन्वितम्
उत्सवेशमलंकृत्य पूजयेद्वाममंत्रतः २८
नैवेद्यं धूपदीपं च आरात्रिकसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति २९
सोमपूजां प्रविश्याथ यथा स्थाने निवेदयेत्
प्रतिसंवत्सरं कृत्वा फलपूजां समाश्रितम् ३०
नित्यनैमित्तिकं कृत्वा निदादग्निं समर्पणम्
आचार्यदक्षिणां दद्यात् प्रतिसंवत्सरं क्रिया ३१
इति सहस्रतंत्रे क्रियापादे फलपूजाविधिद्वाविंशतिपटलः २५

२६
अथातस्संप्रवक्ष्यामि पवित्रोत्सवविधिक्रमम्
आषाढे शुक्लपक्षे तु श्रावणे वा विशेषतः १
नभस्यैवाश्वयुङ्मासे कृष्णपक्षे थवा पुनः
द्वितीयादिचतुर्थ्यादि तथा षष्ठ्यादि वा पुनः २
अष्टम्यन्त प्रकर्तव्यं पवित्रं सर्वसिद्धिदम्
अष्टम्यादिदशम्यादि द्वादश्यादि च वा पुनः ३
चतुर्दिश्याधिकं कुर्यात् पवित्रारोहणोत्तमम्
सप्तम्यां वा त्रयोदश्यां रेवत्यां कृत्तिकान्वितम् ४
आर्द्रायां रोहिणीयुक्ते कारयेत्तत्पवित्रकम्
एकाहं वा त्रयाहं वा पंचाहं वा नवाहकम् ५
सप्ताहं वा प्रकर्तव्यं पवित्रोत्सवमाचरेत्
विशेषपूजां कृत्वा तु देवदेवेश्वरं हरम् ६
विज्ञाप्य देवदेवाय पूजाहीनादि किल्बिषम्
देवदेव जगन्नाथ यत्क्रिया मंत्रहीनकम् ७
मंत्रं च क्रियया तत्र बुद्ध्यादिकरणानि च
अन्यया पूजितं सर्वं संपूर्णास्सन्तु मे प्रभो ८
एवं विज्ञाप्य देवाय तं नमस्कृत्य भक्तितः

ऐशान्ये सौम्य पूर्वे वा स्थापयेद्यागमण्टपम्  ९
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
पंचाग्निं वा शिवाग्निं वा मध्ये वेदीं समं प्रभोः  १०
प्राधान्यं वृत्तकुण्डं तु मण्डले स्थण्डिलेऽथवा
वेदिकोर्ध्वे न्यसेद्विद्वान् पिष्टचूर्णेन वा पदम्  ११
पूर्वादि च चतुर्दिक्षु पदानां च चतुःश्रुति
पीतं रक्तं तथा कृष्णं गोक्षीरं स्फटिकप्रभम्  १२
चतुर्दिक्षु श्रुतिर्लिंगं तन्मध्ये बिसिनीदळम्
चतुष्कोणे चतुःपद्मं चतुर्दळसमन्वितम्  १३
पीतं शुक्लं तथा रक्तं कृष्णाभं धूम्रवर्णकम्
एतानि सर्ववर्णानि कल्पितं रजनीं तथा  १४
तन्मध्ये शिवकुंभे तु तन्मध्ये कर्करी शिवम्
पंचरत्नं तु हेमं वा धान्यं वा रजतं तु वा  १५
सरस्नांगं समूर्तिं च विद्या देहं समूलकम्
मनोन्मनीमीशदिग्भागे अर्चयेच्छंभुरीश्वरम्  १६
द्वारदेवान्समभ्यर्च्य अष्टद्रोणैश्च शालिभिः
तन्मध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम्  १७
गड्डुकैः क्षाळयेत्तोयैः पवित्रं संख्ययान्वितम्
वने कार्पाससंयुक्ते निर्मितं द्विजकन्यया  १८
अथवा निर्मितं चान्यैः क्षाळयेद्भस्मवारिणा
गोमयालेपनं कृत्वा चतुरश्रसमन्वितम्  १९
कीलकं पश्चिमे पूर्वं आस्थाप्य द्विजसत्तमः
लिंगोत्सेधं परिभ्राम्य बिम्बोत्सेधं ससद्मकम्  २०
एवं तु नवसूत्रेण पवित्रं कारयेच्छुभम्
वामादिशक्तयस्तत्र नवसूत्राधिदेवताः  २१
लिंगोत्सेधसमायामं प्रासादे तु पवित्रकम्
हस्तमात्रसमायामं पवित्रमिह शोभनम्  २२
सूत्रैर्विवृद्धयेद्विद्वान् नवधा तु पवित्रकम्
अथ मन्त्रयमित्युक्तं नवषोडश विंशतिः

पंचविंशति द्वात्रिंशत् षट्त्रिंशन्मध्यमत्रयम् २३
पंचाशत्सप्ततिश्चैव नवती चोत्तमत्रयम्
एतेष्वेकं यथाशक्ति संगृहेत्तु महेश्वरः २४
तेषां मध्ये दशग्रन्थिं बध्वा सूत्रेण देशिकः
नवाष्टसप्तभिः कुर्यात् ग्रन्थिबन्धनसूत्रकम् २५
इन्द्रादिलोकपालाश्च ग्रन्थीनामधिदेवताः
तत्तत्पवित्रशुध्यर्थं तत्तद्रात्राधिवासयेत् २६
शालितण्डुलपुष्पाद्यैः स्थण्डिलं चतुरश्रकम्
तस्योपरि पवित्राणि संस्नाप्य शिवमंत्रतः २७
पवित्रं स्थापयेन्मध्ये रोचना कुंकुमं शशि
संमृज्य लेपनद्रव्यैः सर्वगन्धानुलेपनम् २८
वस्त्रैराच्छाद्य शिरसा धूपयेद्धृदयेन तु
भस्म चन्दनमुच्चूर्णं वारुणे स्थापयेद्दिशि २९
विटकं चोत्तरे भागे दन्तकाष्ठं च पूर्वतः
पात्रपादुकप□ाद्यैः दक्षिणे स्थापयेद्दिशि ३०
एतानि गन्धपुष्पाद्यैः अर्चयेद्धृदयेन तु
धूपदीपसमायुक्तं पूजयेद्वर्णमंत्रतः ३१
प्रभूतहविषं दत्वा ताम्बूलैरुपचारकैः
अग्निकार्योक्तमार्गेण शतं हुत्वा विचक्षणः ३२
समित्कुलैश्चरुं हुत्वा पूर्णं पौर्णे शताहुतिम्
नृत्तगेयसमायुक्तं रात्रौ निद्रां विवर्जयेत् ३३
प्रभाते विधिवत्स्नात्वा सकळीकृतविग्रहः
यागदेवान् समभ्यर्च्य आचार्यः शिष्यसंयुतैः ३४
प्रथमं कृषिकं दद्यात् द्वितीयं स्कन्दमेव च
तृतीयं रविमारोप्य चतुर्थमाचार्यस्य च ३५
पंचमं कर्म मूर्तिं च षष्ठं वै शक्तयस्तथा
सप्तमं तु महेशादि अष्टमं क्षेत्रपालकम् ३६
नवमं चण्डरूपं च दशमं होमकर्मणि
गंगावतारकं चैव कंकणत्रयमेव च ३७

पूरयन्मखवृतञ्चैव नियमेशनमः पदम्
किं तु तत्वत्रयं मंत्रं पवित्रं गन्धदापयेत् ३८
अपरे दिवसे चैव पवित्रं शुद्धवच्छिवम्
नित्यं प्रातः समुत्थाय स्नानतर्पणतत्परैः ३९
यागद्वारे प्रविश्याथ पादप्रक्षाळनं विधिः
करन्यासादिजीवन्तं भूतशुद्धिमथाचरेत् ४०
सौरादिशक्तिकुंभान्तमर्चयेद्देशिकोत्तमैः
अग्न्यादिसंहिता माता शान्तिमूर्तिं मनोहुतिम् ४१
नैवेद्यं धूपदीपं च मुखवाससमन्वितम्
महेशमर्चनं कृत्वा आसनत्रयदेहकम् ४२
एकादशादिरावृत्य वामान्तं शक्तिमण्डलम्
अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यरूपचारकैः ४३
यात्राहोमं प्रकर्तव्यं मुखमष्टहृदिस्तथा
प्रासादप्रदक्षिणं कृत्वा यागमण्टपमाविशेत् ४४
यागद्वारे स्थितो देवं सर्वघोषविवर्जितम्
पाद्यमाचमनं चार्घ्यं ताम्बूलं धूपदीपकम् ४५
शिवाग्निं भस्म संयुक्तं देवदेवीं सुधारकैः
आचार्यश्शिष्यसंयुक्तैः शिवशक्तिस्वरूपकैः ४६
ब्राह्मणस्त्रितयं कृत्वा ब्रह्मविष्णुहराधिपाः
लाजोपकरणं कृत्वा पंचमूर्तिकरान्वितम् ४७
आचार्यश्शिष्यसंयुक्तं त्र्यम्बकं प्रणवं मनुः
ब्राह्मणं त्रितयं वाक्यं ब्रह्मजज्ञानविश्वकम् ४८
विष्णो रराटकं मंत्रं शंखघोषसमन्वितम्
उद्धवं मुद्रयां युक्तं देवीश्वरशिवं यजेत् ४९
सर्वघोषसमायुक्तं सर्ववाद्यसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा स्वस्वदेशे तु नृत्तकम् ५०
एककालं द्विकालं वा भ्रामयेत्सोमधारकम्
यानं प्रतिदिनं कुर्यात् यागान्तं तीर्थसंयुतम् ५१
विशेषपूजनं कृत्वा स्नपनं षोडशान्वितम्

चूर्णोत्सवं ततः कृत्वा रजनीचूर्णसंयुतम् ५२
तीर्थसंग्रहणं कृत्वा त्रिशूलेन समन्वितम्
शान्तिहोमं ततः कृत्वा पवित्राणि विसृज्य च ५३
चण्डयागविधिं कृत्वा अग्निकार्योक्तमाचरेत्
लेखनं मुद्रया युक्तं षडंगेन शताहुतिः ५४
आहुनेच्चण्डमंत्रेण तत्तत्पवित्रकं हुनेत्
नित्यपूजादिदोषाणां च शान्त्यर्थमतिथिक्रियाम् ५५
आचार्यदक्षिणं दद्यात् वस्त्रहेमांगुळीयकैः
धातुपंचवसूनिष्कमाचार्याय प्रदापयेत् ५६
पवित्रोत्सवविधिं प्रोक्तं तिलपूजाविधिं शृणु
इति पूर्वसहस्त्रे क्रियातन्त्रे प्रतिष्ठापादे
पवित्रोत्सवविधित्रयोविंशतिपटलः २६

२७

सोमस्कन्दप्रवक्ष्यामि स्थापनं तु महेश्वर
उत्तरायनकाले तु सुमुहूर्ते सुलग्नके १
शुक्लपक्षे च कर्तव्यं वर्जयेदन्यपक्षवत्
माघमार्गयुते मासे भौमपुंगश्च वर्जयेत् २
दारुलोहे पदे वापि भित्तिचित्रा दृषद् भवेत्
निर्माणं च महाभागे तु गणांपि सहपिण्डकैः ३
जटामकुटसंयुक्तं टंककृष्णमृगोद्धृतम्
वरदाभयहस्तं च त्रिणेत्रा शतलोचनम् ४
दक्षपादस्थितं वामं मूलाधारे च संपुटम्
लोहिनी दीप्तवामेशं किंचित्प्रहसिताननम् ५
द्विभुजं श्यामवर्णं च नीलोत्पलवरान्वितम्
पद्ममुद्धृतमासीनं द्विनेत्रं शान्तलोचनम् ६
द्विनेत्रं द्विभुजं वामे आम्रपक्वकरोद्धृतम्
ऐशान्ये सौम्यदेशं वा द्वात्रिंशदायमव्ययम् ७
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्

मध्ये वेदपदं कृत्वा पंचाग्निं पंचवक्त्रवत् ८
दर्पणोदरसंकाशं लेपनं यागमण्टपम्
मंगळाष्टकपदाभ्यां तोरणं च्छत्रशूलकम् ९
मध्ये स्रुक्स्रुवं कूर्मपीठं च आज्यस्थाली त्रयेषु च
सुमुहूर्ते सुलग्ने च अंकुरार्पणमाचरेत् १०
दिनत्रयसमायुक्तं पंचम्यान्तं तिथीषु च
नेत्रयुग्मयुते ऋक्षे नेत्रमोक्षणमाचरेत् ११
कमलाक्षरमुद्धृत्य शाखायां त्रयमुच्चरैः
गोभूहिरण्यकन्या तु दापयेद्देशिकोत्तमैः १२
जलतीरे प्रपां कृत्वा जलमध्ये तु बन्धवत्
दीपं निर्वाणं मे स्थाप्य पंचसप्तत्रिनाडिका १३
प्रभामध्ये चतुर्द्रोणैः शालितण्डुलपद्मकैः
नवकुंभप्रतिष्ठाप्य नन्ततिर्चमनेर्यथा १४
तत्कुम्भबिम्बवत्प्रोक्तं रक्तचन्दनमूर्धनि
अभिषिच्य तथात्मानं प्राकारे तु प्रदक्षिणम् १५
यागद्वारे समाश्रित्य यागपूजा यथाविधि
कदळीस्तम्भसंयुक्तं दर्भदामैर्विभूषितम् १६
वेदिकोर्ध्वे न्यसेच्छालीं तिलतण्डुलविस्तरैः
दळाष्टकसमोपेतं विचित्रं केसरान्वितम् १७
द्वारकुण्डस्य तन्मध्ये शालितण्डुलपुष्पकैः
दळे तत्वसमं लेख्य दर्भकूर्चोपसंभृतैः १८
चतुर्द्वारे चतुर्दिक्षु ++ शालिसंयुतम्
षट्त्रिंशगण्डके भ्राम्य परशुं कर्करी सह १९
शयनवासनमलंकृत्य वसुकुम्भपरिभ्रमैः
तदूर्ध्वे कर्करी युग्मे तन्मध्ये शिवकुम्भकैः २०
गाळितं पूर्णकुंभं च शिववेदी समुच्छ्रितैः
नासिकायुग्मतन्मध्ये त्रिकुम्भस्थापयेद्बुधैः २१
चूताश्वत्थदळोपेतं वस्त्रकूर्चोपविष्टैरैः
सरत्नं संक्षिपेन्मध्ये मंगळाष्टं परिभ्रमैः २२

पर्यग्निकरणं कृत्वा अष्टोत्तरशतं हुनेत्
देशिकं स्नापयेत्पूर्वं शुक्लवस्त्रेण वेष्टनम् २३
शिवद्विजसुपुत्राद्यैः होतृभिः पंचतत्वसु
विघ्नेश्वरं महासेन नैवेद्यं प्रणवं जपेत् २४
प्राचीनुदीचीर्वेदेषु रत्नरत्नेषु कुंभकम्
नन्तु पूर्वगुणे दिक्षु रत्नकुंभप्रतिष्ठितम् २५
देशिकन्यासपूर्वं च द्वारपूजां समाहरेत्
सामान्यार्घ्यं प्रकल्प्यं च पुण्याह प्रोक्षणं बुधः २६
गन्धपुष्पाक्षतैर्बिल्वैः देशिकं संगृहेद्बुधैः
प्राचीषु गणपतिं सौरं शान्तिनन्दिमहस्तथा २७
सरस्वतीलक्ष्मी च तामिन्द्रदेवं समर्चयेत्
दक्षिणे भृगिनो विघ्नं विक्षु दण्डधरेषु च २८
वीरभद्रो महाकालीं भूतिसोमस्य शान्तकैः
वारुणेर्देशमासाद्य वृषभस्कन्दमेव च २९
बलतोरणवारुण्ये शंखपद्मधरण्य युक्
दुर्गावटुकमभ्यर्च्य धूपधूमपरिप्लुतम् ३०
आरोग्य सोमवह्निं च राक्षसवायुरीशकम्
देवी चण्डेश्वरोपेतं गुरुमूर्ति प्रपूजयेत् ३१
धूपदीपं परिभ्राम्य तदूर्ध्वे परशुमर्चयेत्
वेदिकादक्षिणे भागे भूतशुध्यन्तर्युताम् ३२
शिवं यजनविधिं कृत्वा भावनं तु शिवद्विजम्
तत्र शंखं प्रतिष्ठाप्य संहितेन सुपूजितम् ३३
बिल्ववर्ककपत्राद्यैः ताम्रपात्रेषु पूरितम्
गन्धपुष्पादिरत्नेन वस्त्रैराभरणादिषु ३४
अस्त्रमंत्रेण संप्रोक्ष्य युग्मवेदिषु कुण्डवत्
षट्त्रिंशत्तत्वमंत्राध्वां कले पंच त्रितत्वकम् ३५
अर्कयुग्मेषु कुंभे तु न्यासयेत्तु पृथक्पृथक्
कुम्भमूर्तिक्ष्मादीनि भ्रामितं कुंभमर्चयेत् ३६
आसनं मूर्ध्निविन्यस्य विद्यादेहस्य विन्यसेत्

नेत्रमस्त्रं समभ्यर्च्य अष्टत्रिंशन्न्यसेत्पुनः ३७
विद्यादेहं शिवं ध्यात्वा सहस्त्रं किरणान्वितम्
कोटिविद्युन्निभं शक्तिं कर्करी सह चिन्तयेत् ३८
तच्छक्तिर्विद्यया देहं भावयेत्कुंभमध्यमे
कोटिसूर्यप्रतीकाशं वामं शक्तेषु उद्भवम् ३९
चतुर्भुजं त्रिणेत्रं च जटामकुटमण्डितम्
मृगटंकवरायुग्म सोमस्कन्देश्वरं शिवम् ४०
भावयेत्कुम्भमूर्ध्वेषु स्थापनं संनिधानकैः
अवगुण्डनरोधेषु पंचमुद्रां प्रदर्शयेत् ४१
कर्करीं भोगशक्तेषु कोटिविद्युत्समप्रभम्
तमालनीलां द्विभुजां भावयेत्कर्करी हृदे ४२
पार्श्वे कुंभद्वयं देवं आत्मविद्यासहोधिपम्
कर्करीशक्तितत्वं च स्कन्दमूर्तिं प्रपूजयेत् ४३
स्कन्दमूलमनुं वक्ष्ये वौकसंज्ञगतित्रिधा
तदूर्ध्वं सदाशिवोपेतं तन्मंत्रक्रमधीयते ४४
कमठं पंचमं योज्यमभ्रमक्षरसंयुतम्
शाखात्रयसुसंयुक्तं बिन्दुनादसमन्वितम् ४५
सोमस्कन्देश्वरायेति वदेत्पश्चान्नमः पदम्
सोमस्कन्देश्वरं मंत्रं प्रतिष्ठाद्युत्सवेषु च ४६
सन्ततमर्चने मंत्रे आत्मार्थं च परार्थकम्
प्रणवं मायया पंच बीजकाय नमस्य च ४७
शक्तिकुंभादिबिम्बं च प्रतिष्ठाद्युत्सवं प्रति
अभ्यर्च्य गन्धपुष्पाद्यैः अर्चयेत्कुम्भवह्निषु ४८
स्कन्दादिवसुं भान्तं अष्टविद्येश्वराधिपम्
प्रणवं बिन्दुनादेषु स्वस्वनाम्नेषु पूजितम् ४९
अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यं धूपदीपकम्
होतृभिः पंचवक्त्रेषु शुद्धशैवं विशेषतः ५०
शयनवेदिषु तन्मध्ये कमबळं प्राक्शिरान्वितम्
स्थापयेत्तु चतुर्दशं शाययेत्प्राक्शिरोन्तकम् ५१

निद्रा कुंभेषु संपूज्य अनन्तादिशिखराडयकम्
पूर्वादीशानपर्यन्तं अर्चयेद्धूपदीपकैः ५२
मंत्रन्यासाध्वमृत्स्नानैः कषायोदकगव्यकैः
मंत्रन्यासविधिं कृत्वा भद्रापीठे तु दारिकाम् ५३
तत्वन्यासविधिन्यासे आपादतलमस्तकम्
होमकर्माणि उद्दिश्य प्राधान्ये बिन्दुकुंभकैः ५४
पंचसंस्कारमार्गेण होमयेत्पंचश्शतैः
तद्वह्निं पंचकुराडेषु होतृभिः पंचवक्त्रवत् ५५
प्रत्येकं शतसंख्येषु देशिकं होमयेत्पुनः
शिववेदिषु कुराडेषु योजयेद्धूपदीपकम् ५६
प्रक्षाळ्य कुराडवत्सर्वं होमयेत्तत्ववध्वसु
मंत्रन्यासादिकं सर्वं होमयेत्तु पृथक्पृथक् ५७
प्रत्येकं पंचकुराडेषु प्रत्येकं मंत्र तत्वसु
अध्वन्यासविधिः कृत्वा होमयेद्धोतृभिः पृथक् ५८
शयनं वेदिषु दक्षेषु सुसौम्याननमेव च
शंखोदकं पुनर्बिम्बं प्रोक्षयेदस्त्रमंत्रतः ५९
तत्वन्यासं च बिम्बेषु कलान्यासं च विन्यसेत्
षडध्वन्यासयेज्जीवं मातृकान्यासमेव च ६०
मंत्रन्यासं पुनः कृत्वा आत्मविद्याशिवान्तकम्
शक्त्यान्तं न्यासयेद्बिम्बं होमकर्म तु पूर्ववत् ६१
गौरीदेहं न्यसेत्कृत्वा कलागौरीं न्यसेत्त्रिधा
तत्वत्रयविधिन्यासे जानुकर्णशिरोवधि ६२
जागरं नृत्तगीतेषु अधिवासनविधिर्भवेत्
प्रभाते विधिवत्कृत्वा +++ स्नानतत्परैः ६३
पूर्ववत्पूजयेत्कुंभं यागदेवं समर्चयेत्
स्नानमराटपमासाद्यं शालितराडुलविष्टरैः ६४
पद्माष्टकदळैर्न्यस्य गर्भपुष्पैश्च विष्ठरैः
रत्नन्यासविधिं कृत्वा पंचरत्नं विशेषतः ६५
पुरायाहं वाचयेत्कृत्वा धारिकाष्ठोश्च तस्य च

++++ होमयेच्छतमूर्तिषु ६६
सुमुहूर्ते सुलग्ने च स्थापयेत्पीठमूर्तिषु
रत्नादि विन्यसेत्पीठे तदूर्ध्वे बिम्बबन्धनम् ६७
देवस्य वामभागेषु देवीं वामेन बन्धयेत्
तन्मध्ये स्कन्दबन्धेषु सुदृढी कृतचित्रकैः ६८
कषायोदकद्रव्याद्यैः स्नपयेत्पंचगव्यकैः
निद्राकुम्भैरभिषिच्य अनन्तादिदळे न्यसेत् ६९
धौतवस्त्रैः समुन्मृज्य रक्तमाल्यैश्च लेपनैः
पंचावरणमार्गेण होमयेदर्चनैर्बुधः ७०
नैवेद्यं भूतबेरेषु धूपदीपादिशोभितम्
ग्रामप्रदक्षिणं कृत्वा पूर्ववत्स्थानमाश्रितम् ७१
उदकारादिषु गव्यानि महीषच्च हुतं पुनः
स्वस्वकुण्डे सहस्रं च होमयेत्पंचहोतृभिः ७२
पूर्णाहुतिं प्रदद्यान्तं प्रायश्चित्ताहुतिर्भवेत्
जागरन्नृत्तगीतेषु रात्रौ निद्रां विवर्जयेत् ७३
स्नातुकर्मणि संप्राप्ते यागमभ्यर्च्य पूर्ववत्
होमयेत्प्रतिकुण्डेषु सहस्रेषु च होमयेत् ७४
पूर्णाहुतिं क्षिपेद्विद्वान् द्वारपालान्समर्चयेत्
पंचाग्निं वेदावस्थानं पंचस्थानेषु योजयेत् ७५
स्थानदेवान्विसृज्येषु परिचारकं शुचिर्भवम्
प्रधानादिषु कुंभे तु आलयं तु प्रदक्षिणम् ७६
वेदघोषणकुंभेषु भ्रामयेत्कर्करी सह
स्नपनं पंचविंशत्या मंत्रन्यासं च पूर्ववत् ७७
श्रीकण्ठं च कलान्यासे अष्टत्रिंशत्कलान्यसेत्
आसनं मूर्तिदेहेषु सद्यमंत्रेण वाहयेत् ७८
स्थापनं संनिधानं च संनिरोधनमेव च
अवगुण्ठनपंचैते पंचमुद्रां प्रदर्शयेत् ७९
धूपदीपं त्रिधाभ्राम्य आत्मकुंभे तु आत्मवत्
हृदये विद्यरातत्वं शिवकुंभस्य मूर्धनि ८०

कर्करी शक्तिलिंगेषु स्कन्दमूर्धन्यदेशकैः
अभिषिच्य तथात्मानं धौतवस्त्रेण वेष्टनम् ८१
लेपनं रक्तगन्धं च निवेद्यं च महाहविः
ताम्बूलं मुखवासं च धूपदीपादिशोभितम् ८२
आचार्यमनसा प्रीतिं विद्येशाष्टदळे न्यसेत्
नैवेद्यं च पुनः कृत्वा पूर्ववद्युपचारयेत् ८३
आचार्यदक्षिणां दद्याद्वस्त्रहेमांगुळीयकैः
आचार्यमनसा प्रीतिं देवसां निध्यकारणम् ८४
सायुज्यं संपदं प्राप्य इत्येवं च महेश्वरः
इति पूर्वसहस्रे क्रियापादे
सोमस्कन्देश्वरस्थापनविधिश्चतुर्विंशतिपटलः २७

२८
अथातस्संप्रवक्ष्यामि स्थापने चन्द्रशेखरम्
नटेशस्थापनं वक्ष्ये शृणुष्वेमं महेश्वर १
एकपंचत्रियाहं वा अंकुरार्पणमाचरेत्
सुमुहूर्ते सुलग्ने च रवौ तु गुदकेन च २
शुक्लपक्षे तृतीये च प्रतिष्ठारम्भमेव च
पंचमान्तं प्रतिष्ठौ वा वर्जयेन्मन्दभौमकम् ३
माघमासं त्यजेद्धीमान् कर्तव्यं तु शिवद्विजः
शिवद्विजेन कर्तव्यं प्रतिष्ठाद्युत्सवार्चनम् ४
अन्यथा मूर्तिशैवञ्च वर्जयेत्परमेश्वरः
सप्तपंच त्रियाहं वा अंकुरार्पणमाचरेत् ५
अन्यथा चैव कर्तव्यं राजराष्ट्रं विनश्यति
देवतारूपकं वक्ष्ये शृणुष्वेवं महेश्वरः ६
एकवक्त्रं त्रिणेत्रं च जटामकुटमण्डितम्
चतुर्भुजं प्रसन्नात्मा डोलाण्डमरुकं भवेत् ७
शुद्धस्फटिकं महादेवं किंचित्प्रहसिताननम्
मनुवृत्तं च तन्मध्ये मंत्ररूपं नटेश्वरम् ८

वामे शक्तिनिपादस्थं दक्षपादजगद्भ्रमम्
उमाशक्तिसमोपेतं तद्दीशं शक्तिरुच्यते ९
द्विनेत्रं श्यामवर्णं च विकीर्णं केशमेव च
कदम्बपुष्पशिरोपेतं मदभ्रमितं लोचनम् १०
तंत्रीन्नादविनोदिं स्यात् श्यामळां शिवचोदितम्
पद्मपीठे स्थितां देवीं किंचित्प्रहसिताननाम् ११
एवं ध्यात्वा महादेवं निर्मितं शिल्पिको मनुम्
पटे वा भित्तिचित्रे वा लोहं वा प्रस्तरेऽपि च १२
द्वात्रिंशल्लक्षणोपेतं सर्वावयवसुन्दरम्
ऐशान्ये मन्दिरं प्रोक्तं पंचविंशतिहस्तकम् १३
वसुस्तम्भसमायुक्तं चतुर्द्वारसमन्वितम्
वेदिकायां च तन्मध्ये दर्पणोदरसंनिभम् १४
नवाग्निं वाथ पंचाग्निं कल्पयेत्स्थापको मनुः
यागद्रव्यादिसंहृत्य अष्टमृद् रत्नपुष्करम् १५
कषायोदकादि तत्सर्वं यागद्वारे प्रतिष्ठितम्
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत् १६
शालिभिः स्थण्डिलं कृत्वा साष्टपत्रं सकर्णिकम्
शूलं कुंभं प्रतिष्ठाप्य शूलं चक्षुश्च मण्डलम् १७
अर्चयेद्धूपदीपं च पुण्याह प्रोक्षणं तथा
मधुक्षीरघृतं चैव विन्यसेन्नेत्रमर्चयेत् १८
स्वर्णसूची रजो खण्डं नेत्रमुन्मीलनं तथा
अम्बिकासह संलेख्य मधुं तत्र तथा न्यसेत् १९
तत्कुंभं नेत्रमंत्रेण अभिषेकं लघुस्तथा
देवतास्थापनं पीठे रत्नन्यासं यथोचितम् २०
व्योमव्यापि महामंत्रं मूलविद्या सुमंत्रकैः
सुदृढी कृतसंघातैः फलकोर्ध्वेषु विन्यसेत् २१
मृदोदकादि संपूज्य शुक्लवस्त्रेण वेष्टयेत्
शुक्लमाल्यैरलंकृत्य उक्तकूर्चषडा न्यसेत् २२
ग्रामप्रदक्षिणं कृत्वा जलमध्ये तु विन्यसेत्

षोडशं मंत्रकं वाथ यामान्तं विन्यसेत्प्रति २३
स्थण्डिलाष्टदळं कृत्वा दशकुम्भं सहोदितम्
शिवश्शक्त्याष्टविद्येशान्धूपं दीपं हृदार्चयेत् २४
सुस्नाप्य देवदेवीं च धूपदीपं समन्वितम्
पटे वा भित्तिचित्रे वा खड्गदर्पणमेव च २५
यागद्वारे समासाद्य दक्षिणाभिमुखं शिवम्
यागसंमुखदेवीं च विन्यसेत्तु विचक्षणः २६
एकाशीति पदं कृत्वा एकाशीति मनुं हुनेत्
पर्यग्निकरणं कृत्वा परिचारक आदरात् २७
शालिभिः स्थण्डिलं कृत्वा यागवेदिषु सर्वगैः
दळाष्टकसमोपेतं विचित्रं केसरेषु च २८
शूलद्रोणेषु तत्पूर्णं सलक्षणं समन्वितम्
न्यासिकां कर्करी मध्ये सर्वलक्षणसंयुतम् २९
भ्रामयेन्मूर्ध्नि कुंभं च क्षाळयेद्वारिणा सह
गन्धोदकस्य मूर्तिं च पूरयेद्भ्रमरी स्थितम् ३०
शिवशक्तिश्च रत्ने तु पूरयेन्मध्यमे न्यसेत्
कूर्चपल्लवसंयुक्तं नाळिकेरफलान्वितम् ३१
नववस्त्रेण संच्छाद्य मंगळानां तु विन्यसेत्
शयनं वेदिं प्रतिष्ठाप्य द्वारकुण्डस्य मध्यमे ३२
शालिभिः स्थण्डिलं कृत्वा षट्त्रिंशद्द्रोणपूरितम्
षट्त्रिंशद्दळविस्तीर्णं विचित्रं केसरान्वितम् ३३
तदूर्ध्वे कम्बळं भूते तदूर्ध्वे विन्यसेत्प्रति
उमां चैव नटेशं च प्राक्शिरोर्ध्वमुखस्य च ३४
पूर्वादीशानपर्यन्तं विद्येशाष्टघटानि च
चूडदेशे शिवं कुंभं वर्धनी सह संयुतम् ३५
निद्राकुंभं प्रतिष्ठाप्य अर्चयेत्स्वस्वनामकैः
पूर्वादीशानपर्यन्तं सप्तविंशद्घटे स्थितम् ३६
पाशुपतं च कुंभं तु ऐशान्ये विन्यसेत्ततः
देशिकं स्नापयेत्कृत्वा सामान्यार्घ्यं समन्वितम् ३७

शान्त्यादिद्वारमभ्यर्च्य सप्तविंशद्धटार्चयेत्
वेदिका दक्षिणे भागे विशेषार्घ्यसमन्वितम्  ३८
शिवयजनविधिं कृत्वा शिवहस्तपरायणः
मध्ये कुंभं प्रतिष्ठाप्य मंत्रन्यासं न्यसेद्धटे  ३९
अध्वन्यासे प्रतिष्ठाप्यमावाह्यं पंचमुद्रया
वर्धनीं च कलागौरीं मूर्तिरासनमेव च  ४०
मूलमंत्रेण संपूज्य अनन्तादिषु मूर्तिषु
धूपदीपं त्रिधभ्राम्य नैवेद्यं च समन्वितम्  ४१
प्रधाकुण्डे समाश्रित्य पंचसंस्कारमार्गतः
होमयेत्पंच वक्त्रेषु पंचायुतञ्च होमयेत्  ४२
तद्वह्निं कुंभसंयोज्य पंचकुण्डेषु होमयेत्
शयनं वेदीं समासाद्य निद्राकुंभं समर्चयेत्  ४३
शिवमंत्रं समभ्यर्च्य शक्तिमंत्रे समर्चयेत्
परितः कुंभमभ्यर्च्य अनन्तादिशिखण्डकैः  ४४
बिम्बन्यासविधिं कृत्वा षट्त्रिंशद् ध्वरखण्डकैः
मूलमंत्रं न्यसेत्सर्वं बिम्बमध्ये न्यसेत्तदा  ४५
कमठा क्षरोपेतं वेदबिन्दुश्च नादकम्
अजपाक्षरसंयुक्तमानन्दताण्डवाय च  ४६
स्थापने उत्सवो मन्त्रं मूलमन्त्रं महेश्वरम्
जागरं नृत्तगीतेषु तदूर्ध्वे प्रतिसरं तथा  ४७
बन्धयेद्धूपदीपं च रात्रौ निद्रां विवर्जयेत्
प्रातः प्रभृति सायान्तं बेरं डासं समर्चयेत्  ४८
यागपूजादिकं कृत्वा पूर्वोक्तविधिना सह
होमकर्म समारभ्य पंचलक्षणहोमयेत्  ४९
समिध सद्यमन्त्रेण चरुं वामेन हूयते
द्रव्यादिघोरसंयुक्तं पुरुषेण घृतस्य च  ५०
सर्वद्रव्यादिसंयुक्तं ईशेनैव पृथक्पृथक्
पंचलक्षं हुनेत्पश्चात् बेरमध्ये त्रितत्वकम्  ५१
विन्यसेल्लाजसंयुक्तं कुसुमदर्भादिसंयुतम्

बेरमुद्धृत्य यागोर्ध्वे प्रतिहारं च विन्यसेत्  ५२
यागपूजादिनैवेद्यं धूपदीपं निवेदयेत्
मुखवासेन संयुक्तं दर्पणाद्युपचारकैः  ५३
द्वारकुम्भादिदेवेषु मुद्वाहनेषु पीटवत्
अग्निं देवेषु कुम्भेषु कुम्भदेवेषु बिम्बवत्  ५४
निद्रादिदशकुम्भैश्च अभिषेकं नटेश्वरम्
शान्तिहोमसहस्रेण कुम्भाभिषेकमाचरेत्  ५५
प्राधान्यं वेदिकापंक्ति प्रासादं तु प्रदक्षिणम्
ब्राह्मणान् स्वस्ति वाचेभ्यो तत्कुंभस्य न +++
तत्वरध्वेषु मन्त्रेषु मात्रकान्यासमेव च
मन्त्रे न्यासकला न्यास् जीवन्यासञ्च विन्यसेत्
मूर्धानं लास्यमूर्तेषु सद्यमन्त्रे च वाहयेत्  ५६
स्थापनं संनिधानं च संनिरोधनमेव च
अवकुण्ठनपंचैते पंचमुद्रां प्रदर्शयेत्  ५७
पंचोपचारमार्गेण पूजयेत्परमेश्वरम्
शिवान्ते व्यापकत्वेपि उमाशक्तिसमन्वितम्  ५८
उदकादिविधिस्नाप्य गव्यपंचामृतैस्सह
तिंत्रिणी मर्दयेत्पश्चात् शिवकुंभं समुद्धृतम्  ५९
हृदये कुंभसंयोज्य शक्तिकुंभस्तनं तथा
विद्वेशान् ज्वालदेशे तु मूर्तिकुम्भं च विन्यसेत्  ६०
धौतवस्त्रेण चोंमृज्य धौतवस्त्रोत्तरीयकैः
माल्यगन्धादिभिस्सर्वभूषणैर्गन्धपुष्पकैः  ६१
महाहविर्निवेद्यं च ताम्बूलं मुखवासकम्
धूपदीपं परिभ्राम्य आरात्रिकसमन्वितम्  ६२
ग्रामप्रदक्षिणं कुर्याद् देवालयसमाश्रितम्
नाळिकेरफलं चैव अपूपं च निवेदयेत्  ६३
धूपदीपादिभिस्सर्वं गीतनृत्तं च वाद्यकम्
पूजयेद्देशिकं पश्चात् वस्त्रहेमांगुळीयकैः  ६४
होतार्स्तृप्तिभावेषु शिवसायुज्यमाप्नुयात्  ६५

इति पूर्वसहस्रे क्रियापादे नटेश्वरस्थापनविधिपंचविंशतिपटलः २८

२९

अथातस्संप्रवक्ष्यामि गंगाधृक्स्थापनं परम्
मकरादि समोपेतं कुंभं च त्यजेत् श्रवत् १
गुरोरस्तमने चैव मन्दभौमदिनन्तथा
सुवारे सुतिथिर्क्षेदं अंकुरार्पणमाचरेत् २
पटे वा भित्तिचित्रे वा दातुरुर्वतु ताभ्रवत्
द्वात्रिंशल्लक्षणैर्युक्तं सर्वावयवसंयुतम् ३
मंत्ररूपविधिं वक्ष्ये शृणुष्वेव सदाशिवम्
आदिदेवं च विद्रेषु प्रासादं गुणसंपुटम् ४
दीर्घस्वरसमोपेतं भूतधारणमेव च
नमः पद्मामहामन्त्रं प्रतिष्ठाद्यर्चनेषु च ५
मंत्रमूर्तिं त्रिणेत्रं च जटामकुटमण्डितम्
चतुर्भुजसमायुक्तं वरदाभयमेव च ६
जीवनं मूर्ध्वहस्तेषु ऊरुहस्तं धने हृदि
अग्निर्वायुस्तदूर्ध्वेषु तत्पादं जाह्नवीधरम् ७
अष्टमृत्युं च रत्नेषु शडालुक्षारतज्जलम्
पावके मारुतो वापि यागस्थानेषु शिल्पिकैः ८
षट्त्रिंशमव्ययं चैव विशालैस्तु विशालकैः
कलास्तम्भसमोपेतं चतुर्द्वारसमन्वितम् ९
मध्ये वेदीं प्रतिष्ठाप्य भूताग्निं वा सदाख्यकैः
दर्पणोदरसंकाशं वेदिकुण्डस्सुमण्टपे १०
यागद्वारे प्रतिष्ठाप्य बेरकैश्शक्तिभिः सह
नेत्रस्योन्मीलनं कृत्वा शास्त्रदृष्टेन कर्मणा ११
मधुत्रयं न्यसेच्चक्षुं त्रिकुम्भं नेत्रसेचनम्
धूपदीपं परिभ्राम्य रत्नविन्यासमेव च १२
व्यापिनी स्थिरे चले मूले पिण्ड्योर्ध्वे विन्यसेत्तथा
माणिक्यं वज्रवैडूर्यं गोमेदकं स्वर्णयुग्मसु १३

पूरयेत्पूजितं सर्वं त्रयोदशधरादिभिः
स्थाप्यमानेषु बन्धेषु सुदृढं कृतमेव च १४
कषायाष्टमृते चैव स्नापयेत् श्वेतवस्त्रकैः
फलके विन्यसेद्देवं नदीतीरे प्रपांस्य च १५
जलमध्ये स्थितं देवं ज्वालाकैवल्यमेव च
पंचधारुक्रमेणैव विन्यसेच्छ्रुतिघोषणैः १६
देवमुन्मृज्य संमृज्ये माल्यवस्त्रं च गन्धकैः
सौख्यसंख्येषु घोषाद्यैरालयेषु प्रवेशयेत् १७
यागद्वारे समाश्रित्य देवदेवीं च मेव च
यागमभ्यन्तरं कृत्वा शिववेदीं परिव्रतैः १८
अष्टदिक्पतिविंशैस्तु गडुकैः पूर्णजीवनम्
शिववेदीं न्यसेच्छालिं साष्टपत्रं सकर्णिकम् १९
तदूर्ध्वे कुण्डवत्पूर्वे शयनं भूतेशकम्बलैः
शिववासं दशे कुंभैः शयनं तत्र कुम्भवत् २०
भावितं गन्धतोयेन सकूर्चं सापिधानकम्
दर्भैर्लाजैः परिस्तीर्य यागालंकृतपूर्ववत् २१
एकाशीतिपदं कृत्वा होमयेत्करणादिषु
स्नानं तर्पणमाचम्य न्यासकर्माणि पूर्ववत् २२
द्वारमस्त्रेण संप्रोक्ष्य आसनत्रितयं न्यसेत्
तत्वमध्येषु मूलेषु जीवमूलेषु विन्यसेत् २३
ऐशान्ये गंगया प्रोक्तं गौरीकालेषु विन्यसेत्
प्रणवादिस्वनाम्नेन पूजयेद्यागमेव हि २४
अनन्तादिशिखण्डयन्तं भ्रामयेद्गन्धपुष्पवत्
धूपदीपं परिभ्राम्य अग्निकार्यं ततः शृणु २५
पंचसंस्कारमार्गेण पूजयेद्वह्निकुण्डवत्
होमयेद्दशसाहस्रं होमयेत्पंचहोतृभिः २६
पंचाग्निदेवकुंभेषु योजयेत्कर्करी सह
पश्चादस्त्रेण संप्रोक्ष्य होमयेत्तु शताष्टकम् २७
प्रत्येकं पंचवक्त्रेषु होमयेच्छुद्धशैवसु

धूपदीपं परिभ्राम्य शयनस्सर्वदेवताः २८
शयने प्रोक्षणं कृत्वा मंत्रं न्यासं च तत्ववित्
अध्वेषु होमयेन्न्यासं तत्वत्रयेषु योजितम् २९
अध्वे सर्वं समभ्यर्च्य देवं हस्तेषु बन्धयेत्
देवीनां वामहस्तेषु बन्धयेद्धूपदीपवत् ३०
पूर्णाहुतिं क्षिपेद्वह्निं बिम्बमध्येषु योजयेत्
पुनः कुण्डांभसा प्रोक्ष्य होमयेत्संहितेन वै ३१
होमयेद्ब्रह्मभिर्मन्त्रैः अष्टोत्तरशतं क्रमात्
वाद्यगीतेषु नृत्तेषु सौख्यसंख्येषु जागरम् ३२
जागरं सौख्यसंख्येषु रात्रौ स्वप्नं विवर्जयेत्
प्रभाते विधिवत्स्नात्वा स्नानतर्पणतर्पणैः ३३
पूजयेत्पूर्ववत्कृत्वा धूपदीपादिभिश्शिवम्
होमकर्माणि संप्राप्ते पूजयेत्कुंभदेव हि ३४
होमकर्मणि संप्राप्ते प्रत्येकं शतमूर्तिषु
शयनदेवं समुद्धृत्य यागद्वारे प्रतिष्ठितम् ३५
उदकादीनि षड्गव्ये स्नापयेत्तु जलेश्वरैः
निद्राकुंभे हृदे प्रोक्ष्ये गंगायां तु स्तने न्यसेत् ३६
अनन्तादिकुंभमष्टैर्वा स्नापयेदुदकेश्वरम्
श्रीकण्ठं मातृकाश्चैव अष्टत्रिंशत्कलां न्यसेत् ३७
तत्वन्यासं तथान्यासमावहनस्थापनं तथा
संनिधारोधनैर्युक्तं गौरीन्यासे तु शक्तिभिः ३८
योनिमुद्राद्वयोपेतं त्रिखण्डे च निवेदयेत्
यागपूजादिनैवेद्यं होमकर्मक्षिपेत्तथा ३९
पूर्णाहुतिं क्षिपेद्धुत्वा पूर्णासहितं शिवम्
तत्वत्रयं न्यसेद्बिम्बं अग्निस्थं कुंभयोजयेत् ४०
कुम्भस्थं देवता प्रोक्तं प्रासादे तु प्रदक्षिणम्
द्वारकुम्भान्विसृज्येषु मूर्तिकुंभेऽभिषेचयेत् ४१
कर्करी स्तनमध्ये तु धूपदीपादिभिः शिवम्
महामायासमायुक्तं अर्चयेत्पंचमावृतम् ४२

महाहविर्निवेद्यं च पूजयेत्परमेश्वरम्
ताम्बूलं मुखवासं च धूपदीपसमन्वितम् ४३
ग्रामप्रदक्षिणं कृत्वा यथास्थाने प्रतिष्ठितम्
आचार्यमनसा प्रीतिः शिवसायुज्यमाप्नुयात् ४४
इति पूर्वसहस्रे क्रियापादे गंगाधरस्थापनविधिः षड्विंशतिपटलः
२९

परशुस्थापनविधिपटलः ३०

परशुस्थापनं वक्ष्ये शृणुष्वेवं महेश्वर
उत्तरायणकालेषु यजे विद्वान्घटस्य तु १
शुक्लपक्षे प्रभूतान्तं प्रतिष्ठायां शिवद्विज
देवता सर्वरूपेषु निर्मितं तु जनार्दन २
एकवक्त्रं चतुर्बाहुं जटामण्डितमिन्दुयुक्
त्रिणेत्रं श्यामवर्णंशूलपाशांकमीश्वरम् ३
अभयं पद्मपीठोर्ध्वे रक्तमाल्यांबरप्रसूः
शुक्लयज्ञोपवीतञ्च श्वेतवस्त्रेण वेष्टनम्
उपेन्दपशुपसन्तं दापयेत् पतिरीश्वरम्
रुद्राणि सहितं वामे करण्डमकुटान्वितम्
द्विनेत्रमुद्धृतं पद्मं पीठोर्ध्वे स्थाप्यमेव हि ४
द्विहस्तः सा तु नादं च किंचित्प्रहसिताननम्
पटे वा भित्तिचित्रे वा लोहजे भूषणेऽपि वा ५
सुनक्षत्रमुहूर्ते तु अंकुरार्पणमाचरेत्
नयनोन्मीलनं चैव मण्डलत्रितयं न्यसेत् ६
मण्डलं रूपवद्ध्यात्वा त्रिवस्तुं विन्यसेद्घटम्
तत्वन्यासविधिं सर्वं सुदृढी कृतमेव च ७
नदीतीरे तटाके वा योनिश्श्रेयकदीपवत्
पंचसप्तस्थितो देवो जलमध्ये तु विन्यसेत् ८
ऐशान्ये मन्दिरं कल्प्य चतुश्चत्वारिमव्ययम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ९

पंचाग्निं युग्मवेदीषु कल्पयेत्स्थापति प्रभोः
यागद्वारे स्थितो देवो पर्यग्निकरणं तथा १०
भूशुद्धिलेपनं कृत्वा देशिकं स्नानमाचरेत्
देशिकोर्ध्वे न्यसेच्छालिं पद्ममष्टदळसंयुतम् ११
शयनं शालिसंसिच्य दळे मूर्तिं च विन्यसेत्
पूर्वादीशान्तदेशेषु धातुविंशतिगड्डुकैः १२
वैदिको मूर्तियुग्मेषु स्थापयेत्कुंभविन्यसेत्
दर्भैः पुष्पैः परिस्तीर्य पल्लवैश्च शिरस्तथा १३
वस्त्ररक्तविभूषाद्यैः पूजयेद्द्वारमेव हि
शान्त्यादिद्वारमाचार्यैः पूजयेत्परया सह १४
वेदिको दक्षिणे भागे मुखशुध्यन्तरीषु च
शिवहस्तं प्रकल्पं तु भावयेत्तु शिवद्विजः १५
आसनं गन्धमूर्तिं च रसे शब्दस्य मूलवत्
स्पर्शदेहं विचिन्त्येषु भावयेद् ज्ञेयसाधकः १६
आसनमूर्तिमूलं च तत्वरन्ध्रो कलाक्षरम्
मातृकण्ठकलोपेतं मन्त्रमूलं च विन्यसेत् १७
कमठं बिन्दुमुच्चार्य नभो दिग्वस्तरान्वितम्
धनं वा शिमयेद्व्योमं दीर्घबिन्दुस्वरान्वितम् १८
परशुमाताप्यन्तमात्पश्चात् प्रतिष्ठाद्युत्सवेषु च
नैवेद्यं धूपदीपं च वर्धनीं गौरिभूकलाम् १९
अनन्तादिसमभ्यर्च्य कुण्डसंस्कारपंचमम्
होमे पंचसहस्रं च योजयेत्कुंभदेव हि २०
अस्त्रमंत्रेण संप्रोक्ष्य तत्वमंत्रं षडध्वकम्
होमयेच्छयनमाश्रित्य कम्बलं दशकुम्भकम् २१
पूर्ववत्कुंभवद्देवं ईश्वरं च शिखण्डयकम्
तत्वतत्वेश्वरं देवं मूर्तिमूर्तीश्वरं न्यसेत् २२
उदकादि विशेषेण स्नापयेत्प्राक्शिरो न्यसेत्
तत्वतत्वेश्वरोपेतं मूर्तिगत्वेषु रध्ववत् २३
कुम्भन्यासविधिं सर्वं विन्यसेद्दाहुतित्रयम्

जानु ++++ रोपेतं त्रितत्वाध्वं न्यसेच्छतैः २४
हस्तिबन्धनमेवोक्तं रात्रौ संवेदवर्जयेत्
प्रभाते स्नानपूर्वं च पूजयेत्सौरकुम्भतुम् २५
पूर्ववद्यागदेवेषु पूजयेद्धोमकर्मणि
शयनं बिम्बमुद्धृत्य स्नानमण्टपवेशनम् २६
गन्धद्रव्यादिवल्काद्यैः स्नापयित्वा पुरस्सरम्
निद्राकुम्भैर्दशोपेतं देवं देवीं च विन्यसेत् २७
होमयेच्छतभूतेषु पूर्णान्तं कुंभवह्नि तु
धूपदीपादिनैवेद्यमुपचाराणि सर्वशः २८
होतृभिः परिचारेभ्यो स्थापयेन्मूर्तिदेशिकैः
प्रासादं तु प्रदक्षिण्यं नवकुंभं च शक्तिषु २९
गव्यपंचामृतोपेतं स्नापयेत्तिंत्रिणी पुनः
पूर्ववद्व्यापकं भव्यं क्रियां ब्रह्म निवेदितम् ३०
हृदये मूर्तिकुंभं च स्तने वर्धनि विन्यसेत्
पिण्डिकां मूर्ध्नि कुम्भेषु योजयेच्छुद्धशैवकम् ३१
वस्त्राभरणदामैश्च भूषणैश्च विचित्रकैः
महाहविर्धूपदीपं च नैवेद्यं धूपदीपकम् ३२
मुखवासनताम्बूलं नीराजनसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा पूर्ववत्स्नपनं नवः ३३
नैवेद्यं धूपदीपं च उपचाराणि सर्वशः
नित्यनैवेद्य धूपेश्च नीराजनसमन्वितम् ३४
कुलैकविंशमुद्धृत्य सायुज्यस्सत्यमाप्नुयात्
आचार्यस्तृप्ति भावे च दापयेद्ब्राह्मणो शिवम् ३५
अन्यथाश्शैवसंख्येषु वर्जयेत्स्थापनं तथा
अन्त्यशैवं प्रतिष्ठाप्य राजराष्ट्रं विनश्यति ३६
दुर्भिक्षं कलहं चैव स्थानभ्रंशं विनाशनम्
वर्जयेदन्यशैवेषु स्थापनाद्युत्सवान्तकम् ३७
परशुस्थापनं प्रोक्तं कंकाळस्थापनं शृणु ३८
इति पूर्वसहस्रे क्रियापादे परशुस्थापनविधिः सप्तविंशति पटलः ३०

## कंकाळस्थापनविधिः ३१

कंकाळस्थापनं वक्ष्ये शृणुष्वेवं जनार्दन
उत्तरायणकाले तु सुमुहूर्ते सुलग्नके १
चापगङ्गश्च भौमश्च गुरुरस्तमनं त्यजेत्
सुमुहूर्ते सुलग्ने च अंकुरार्पणमाचरेत् २
पटे वा भित्तिचित्रे वा लोहजे रत्नकद्रकम्
चतुर्बाहुं त्रिणेत्रं च मूर्ध्व +++++ ३
स्थापनं वक्ष्यते प्रोक्तं ++ र्पकं दण्डमीश्वरम्
उत्तरायणकाले तु सुमुहूर्ते सुलग्नके ४
अंकुराण्यार्पयेत्पूर्वं लोहजैर्दृषणैपि वा
पटे वा भित्तिचित्रे वा निर्मितश्शिलिसाधनम् ५
त्रिणेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम्
शुक्लयज्ञोपवीतं च श्वेतवस्त्रोपरीवृतम् ६
हुतवहफणिमुद्रे दक्षिमूले सुधारिणम्
वेदघोषैश्च राम्ने तु दुपेन्द्रं नादघोषणैः ७
अगस्त्यश्च पुलस्त्यश्च विश्वामित्रः पराशरः
जमदग्निश्च वाल्मीकिष्षडाचार्यैः परीवृतम् ८
पद्मपीठे स्थितं रत्नं सुदृढी कृतेमव च
नेत्रं च मोक्षणं कृत्वा जलतीरे निवेशयेत् ९
स्नपनं नवकुम्भेषु वेदध्वनिसमन्वितम्
पंचसप्तत्रिनाडीषु स्थापयेज्जलमध्यमे १०
आलयं तु पुनर्गत्वा षट्त्रिंशत्करसंयुतम्
मूर्तिस्तम्भसमायुक्तं पंचाग्निं कल्पयेद्बुधः ११
मध्ये वेदिपदं प्रोक्तं चतुरश्रसमन्वितम्
चतुरश्रसमायुक्तं चतुर्द्वारसमन्वितम् १२
दर्पणोदरसंकाशं मुक्तादामैरलंकृतम्
वेदिकोर्ध्वे न्यसेच्छालिं मूर्तिकेसरसंयुतम् १३
पंक्तिकुंभदळोपेतं नाळिकेरफलं शिरः
सकूर्चं सापिधानं च मूर्तिभूतं सदाशिवम् १४

तत्पूर्वे होमसंपाद्यै शयने वेदिसमन्वितम्
पंचकम्बळसंकल्प्य दशकुम्भं प्रतिष्ठितम् १५
तन्मध्ये आसनं कल्प्य स्नापयेदुदकादिभिः
प्राक्शिरं विन्यसेद्वेरं स्थापयेन्न्यासकर्मणि १६
पूर्वादीशानपर्यन्तं स्थापयेद्धातुविंशतिम्
पूजयेत्स्वस्वनाम्ना तु शान्ति नन्द्यादिकं यजेत् १७
वेदिका दक्षिणे भागे भूतशुद्ध्यन्तरीयताम्
आसनं मूर्तिमूलं च विद्या देहं च विन्यसेत् १८
वर्धनीं शक्तिमंत्रेण अनन्तादिशिखण्ड्यकम्
नैवेद्यं धूपदीपं च तांबूलं च समन्वितम् १९
पंचाग्निं होमयेत्पश्चान्मूर्तिकुम्भे नियोजयेत्
निद्राकुंभार्चनं कृत्वा शिवशक्तिसमन्वितम् २०
क्ष्मादिव्योमान्तमभ्यर्च्य मूर्तिमूर्तिशिखण्ड्यकम्
होमयेत्संहितेनैव प्रत्येकं लक्षलेखनम् २१
बेरन्यासादिमंत्रस्य खरध्वैककलान्यसेत्
प्रतिसरं बन्धयेद्ध्यात्वा रात्रौ निद्रां विवर्जयेत् २२
प्रभाते स्नानार्चनोक्तव्यं पूर्ववन्न्यासकर्मणि
निद्रा देवं समुद्धृत्य यागद्वारे प्रतिष्ठितम् २३
स्नापयेन्मृत्कषाये तु गव्यपंचामृतैस्सह
निद्राकुंभं समुद्धृत्य स्नापयेद्धृदयेन तु २४
अनन्तादिसहोपेतं गुह्यदेशेऽभिषेचनम्
धूपदीपं परिभ्राम्य होमकर्म तु पूर्ववत् २५
पूर्वविद्यांगदेवेषु अर्चयेत्प्लथरादिषु
अध्वे चैव हितोपेतं पूजयेद्यागदेव हि २६
होमयेत्परया बिन्दुं प्रत्यक्षं सर्वतोमुखम्
हिते नैव सहस्त्रेषु प्राधान्ये होमयेत्पुनः २७
पंचाग्निं प्रतिनिक्षिप्य रुद्रमूर्तिं विनिक्षिपेत्
वह्निदेवं च देवेषु प्रधाने विनियोजयेत् २८
किं तु तत्रय विन्यासे जानुकण्ठशिरोविधिः

लाजैर्दर्भैः परिस्तीर्य योजनो द्वाहने भवेत् २९
चिच्छक्तिस्सह संकीर्णं सहस्रकिरणान्वितम्
भावयेज्जगदेकं च मूलं जीवेषु योजयेत् ३०
श्रिया ब्रह्मप्रयोगं च शिवसांनिध्यकारणम्
वह्निकुंभे तु संयोज्य तत्कुंभं हृदये न्यसेत् ३१
कर्करीस्तनमध्येषु योजयेन्मनुसन्तज
प्रणवं बिन्दुनादं च वह्निमाया समन्वितम् ३२
अजपेतु समुच्चार्य शिवस्वाहामनुव्रजेत्
धूपदीपं परिभ्राम्य द्वारकुंभान्विसर्जयेत् ३३
नैवेद्यं पनसं चैव गुळखण्डैश्च पायसैः
मुखवासनताम्बूलैरुपचारानि सर्वशः ३४
आलयं तु प्रदक्षिण्यां सर्वघोषैरलंकृताम्
स्नपनं पंचविंशत्या नैवेद्यं दक्षिणाननम् ३५
नित्यपूजार्चनं कृत्वा आसना वरणैस्सदा
शिवं मन्तयेत्पूज्य धूपदीपसमन्वितम् ३६
होतृभिर्देशिकाद्यैश्च प्रीणयेत्सर्वदेव हि
सायुज्यं संपदं प्राप्य फलं तत्रैवमुच्यतम् ३७

इति पूर्वसहस्रे क्रियापादे प्रतिष्ठातन्त्रे
कंकाळस्थापनविधिरष्टाविंशतिः पटलः ३१

## कालारिस्थापनविधिः ३२

स्थापनं कालनाशस्य सर्वमासेषु चाच्युतः
उत्तरायण कालेषु सुवारे चैव मुहूर्तके १
सद्यवक्त्रोद्भवं देवं सर्वसिद्धिप्रदायकम्
ऊर्ध्वकेशं त्रिणेत्रं च सुदंष्ट्रं भैरवाननम् २
त्रिशूलं दक्षहस्ते तु वामे निशित पाशकम्
परशुं घण्टारवोपेतं वामपादस्थितं जगत् ३
दक्षिणं सार्धमध्यस्थं जीवस्थाने समाश्रितम्
पटे वा दृषणे वापि लोहजे तुण्डमेव च ४

नेत्रयुग्मयुते क्षेत्रे नेत्रोन्मीलनमाचरेत्
रत्नं न्यासं दृढी कृत्य यागशालां प्रकल्प्य च ५
वारुणे तु कलामष्टत्रिंशत्करसमन्वितम्
पंचाग्निं वेदिकोपेतं चतुर्द्वारसमन्वितम् ६
जलमध्ये प्रपां कृत्वा स्थापयेत्सप्तरात्रिषु
उद्धृत्ययागमूर्ध्वेषु स्थापयेत्सुतिथिः प्यसुः ७
वैदिकं पूर्वदिग्भागे एकाशीतिपदं हुनेत्
पर्यग्निकरणं कृत्वा स्थापयेद्देशिकोत्तमैः ८
शालिभिः स्थण्डिलं कृत्वा वेदिकोर्ध्वे विचक्षणैः
मूतिपत्रविचित्रेषु दर्भैः पुष्पैश्च गड्डुकैः ९
परिधिर्विष्टरोपेतं दशकुम्भं विलोमतः
मध्ये सदाशिवं कुंभं ऐशान्ये वर्धनीयुतम् १०
अनन्तादि समभ्यर्च्य नैवेद्यं धूपदीपकम्
शयनं च समाश्रित्य कम्बळं न्यासवक्त्रवत् ११
बेरस्नानादिकं सर्वं रक्तवस्त्रेन वेष्टितम्
प्राक्शिरं विन्यसेच्छायां नवकुम्भं प्रपूजयेत् १२
निद्राकुम्भं शिरोदेशे न्यस्तव्यं मूलमन्त्रवित्
प्रणवं बिन्दुनादं च मद्वितीयाक्षरान्वितम् १३
सदाशिवाय कलानां स्वाहान्तं मंत्रमूलवत्
क्ष्मादिव्यो मान्तकुंभे तु पूजयेन्मूर्तिकुम्भवत् १४
बेरन्यासविधिं सर्वं मन्त्रोर्ध्वादिरसेन युक्
षट्त्रिंशत् तत्वमन्त्रेषु त्रिखण्डं विन्यसेत्पुनः १५
पुनः कर्ताक्षरं बिन्दुं कमळाक्षरविन्यसेत्
प्रतिसरं बन्धयेद्देवं होमकर्म च पूर्ववत् १६
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
प्रत्यहं शतसहस्रं च होमयेत्तु दिशां प्रति १७
पूर्णान्तं मूर्तिकुंभे तु योजयेत्प्रोक्षणं पुनः
संहितां मनसे भाव्य होमयेद्धूपदीपकम् १८
गीतनृत्तादिकाले तु रात्रौ निद्रां विवर्जयेत्

प्रविश्य विधिवत्कर्म जपतर्पणहोमकैः १९
पुण्याहप्रोक्षणं कृत्वा पूर्ववत्पूजयेच्छिवम्
नैवेद्यं धूपदीपं च शयनदेवं समुद्धृतः २०
निद्राकुंभं समुद्धृत्य अभिषेकं च बिम्बवत्
पूर्ववन्न्यासयेत्सर्वं मंत्रं न्यासत्रिखण्डवत् २१
षडध्वान्यासयेत्सर्वं पूर्वन्यासमसमाचरेत्
होतृभिः पंचवक्त्रेषु होमयेन्मूलमूर्धनि २२
आवाहयेत्ततो देवं सद्योजातेन मंत्रवित्
बालं सूर्यप्रतीकाशं सहस्रकिरणान्वितम् २३
कोटिबाडवराहेषु शिवशक्तिस्सदाशिवम्
भ्रामयेन्मूलमंत्रेण क्रिया ब्रह्मप्रयोगवित् २४
पंचाग्निं मूर्ध्नि संयोज्य पूर्णान्तं होमयेद्बुधः
मूर्तिकुंभं समुद्धृत्य प्रासादे तु प्रदक्षिणम् २५
पंचविंशद्घटैस्स्नाप्य गव्यपंचामृतैस्सह
कुंभे मूर्तिं समभ्यर्च्य धूपदीपसमन्वितम् २६
तत्कुंभं हृदये न्यस्य तच्छक्तिं पिण्डिकां न्यसेत्
अनन्तादिदळे न्यस्य धूपदीपं हृदान्यसेत् २७
वस्त्रैराभरणैर्माल्यैः नैवेद्यं च महाहविः
मुखवासनताम्बूलं दापयेत्परमेश्वरम् २८
आलयं तु प्रदक्षिण्यां सर्वघोषैरलंकृतम्
शान्तिहोमं सहस्रेषु पूर्ववत्पूजयेत्सदा २९
आचार्यमनसाप्रीतिः सुपुण्यां गतिमाप्नुयात् ३०

इति पूर्वसहस्रे प्रतिष्ठातन्त्रे क्रियापादे
कालारिस्थापनविधिरेकोनत्रिंशः पटलः ३२

हर्यर्धस्थापनविधिः ३३

हरिहरार्धं प्रवक्ष्यामि शृणुष्वेवं सदाशिव
स्थापनं सर्वमासे तु निर्मितं स्थापति प्रभुः १
सर्वरूपं विशेषेण उपेन्द्रार्धशिवं सदा

एकवक्त्रं द्विपादं च किंचित्प्रहसिताननम् २
टंकचक्रधरं देवं कटिहस्ताभयेषु च
श्यामरक्तनिभं देवं सर्वसांनिध्यकारणम् ३
आत्मानं रूपवद्ध्यात्वा पटे वा दृषलोहवत्
सुमुहूर्ते सुलग्ने तु अंकुरार्पणमाचरेत् ४
नेत्रमोक्षणकं कुर्यात् त्रितयं पूर्ववन्न्यसेत्
नेत्रोन्मीलनमन्त्रेण गोभूकां चन कन्यकैः ५
रत्नन्यासविधिं सर्वं स्थापयेत्सुदृढी कृतम्
फलके विन्यसेद्रज्जुं तंतुर्वाथ विशेषतः ६
जलमध्ये प्रपां कृत्वा तत्र मध्ये प्रतिष्ठितम्
मुखधातुदि वेदोक्तं स्थापयेज्जलमध्यमे ७
ग्रामप्रदक्षिणं कृत्वा स्नापयेद्वा विशेषतः
ऐशान्यं पंचविंशत्या भूयदेव्ययमेव च ८
मूर्तिस्तंभसमायुक्तः चतुस्तोरणभूषितम्
पंचाग्निर्वेदिकोपेतं विन्यसेत्तु विचक्षणैः ९
पुण्याहप्रोक्षणं कृत्वा स्थापयेच्छालितण्डुलैः
पद्माष्टदळसंयुक्तं वेदिकायुग्ममेव च १०
दशघण्टै प्रतिष्ठाप्य निद्रा ++ र्व संख्यया
पूर्वादीशानपर्यन्तं सप्तविंशभ्रमैर्युतम् ११
पर्यग्निकरणं कृत्वा स्नापयेत्तु जितेन्द्रियः
शान्त्यादिद्वारपालानां सप्तविंशद्धटे न्यसेत् १२
निद्राकुंभं समादाय अष्टमूर्तिं मनोन्मनीम्
कंबलं विन्यसेद्वक्त्रं ++ वारिका विन्यसेत् १३
स्नापयेदुदकैस्सर्वं गव्यादित्रीणि मर्दनैः
स्नापयेद्धौतवस्त्रेण वेष्टयेत्कूर्चसंयुतम् १४
प्राक्शिरं विन्यसेद्देवं निद्राकुंभं सदाशिवम्
धूपदीपं हृदा दत्वा शास्त्रदृष्टेन कर्मणा १५
प्राधान्यवासमाश्रित्य पूजयेद्धारिकादिषु
मूर्तिदेहे च नेत्रे तु मूलमंत्रेण वाहितम्

प्रणवं पूर्वमुद्धृत्य द्वितयाद्वर्णदीर्घकैः १७
अकारत्रितयं योज्य हरिराध्वेश्वराय च
स्वाहान्तमर्चयेत्सर्वं ऐशान्ये वा मनोन्मनीम् १८
अनन्तादिसमभ्यर्च्य नैवेद्यं धूपदीपकम्
मुखवासनताम्बूलं होमयेत्पंच वह्निषु १९
प्राधान्ये शिवद्विजः प्रोक्तं होतृभिश्शिष्यसंयुतः
होमयेत्पंचकुण्डेषु प्रत्यक्षं सर्वतो मुखम् २०
पृथक्पृथक् सहस्रे तु योजयेन्मूर्तिकुंभवत्
प्रोक्षयेद्धृदयेनैव होमयेत्पूर्ववन्मनुम् २१
प्रत्येकं पंचसाहस्रं मंत्रन्यासं क्रमान्यसेत्
आधारमूर्तिदेहे च अक्षिमूलं न्यसेद्धृदे २२
षट्त्रिंशत्तत्वरध्वेषु अष्टत्रिंशत्कलां न्यसेत्
श्रीकण्ठमन्त्रकोपेतं त्रिखण्डोर्ध्वे निवेशयेत् २३
जानुकण्ठशिरोदेशे विन्यसेत्परमाणुनाम्
धूपदीपं त्रिधाभ्राम्य प्रतिसरं बन्धयेच्छनैः २४
पूर्णान्तं संक्षिपेद्वह्निं रात्रौ निद्रां विवर्जयेत्
उषस्नानादिकं सर्वं जपतर्पणतत्परैः २५
न्यासकर्मणि संप्राप्ते पूर्ववद्यागदेव हि
अर्चयेत्सर्वदेवेषु होमयेत्सर्वसंख्यया २६
निद्रादेवं समुद्धृत्य निद्राकुंभं न्यसेद्धृदि
वर्धनीं पिण्डकाराष्ट्रैः दळाग्रे तु विचक्षणैः २७
पूर्ववन्मनुस्तव्यं प्रत्येकं गोमयेच्छतम्
द्वारकुंभादिदेवेषु पिण्डके विन्यसेत्सह २८
पूर्णाहुतिं क्षिपेत्सर्वं मूर्तिकुंभे तु योजयेत्
मूर्तिकुंभं दशोपेतं प्रासादे तु प्रदक्षिणम् २९
सहस्रकलशं स्नानं गव्यपंचामृतैस्सह
स्नापयेत्तिंत्रिणीयुक्तं अनन्ताद्यभिषेचनम् ३०
मूर्तिकुंभं समुद्धृत्य हृदये दादिवर्ण तु
वर्धनीं पिण्डकान्यस्य धौतवस्त्रेण वेष्टितम् ३१

गन्धैराभरणैर्माल्यैः नवनैवेद्य धूपकैः
ताम्बूलं दीपमारात्रिं दापयेत्परमेश्वरम् ३२
ग्रामप्रदक्षिणं कृत्वा देवालयं प्रतिष्ठितम्
देशिकं पूजयेत्पश्चाद् वस्त्रहेमांगुलीयकैः ३३
सायुज्यपदमाप्नोति योजयेत्सद्यमेव तु ३४
इति पूर्वसहस्त्रे क्रियापादे प्रतिष्ठातन्त्रे
हरिहरार्धस्थापनविधिस्त्रिंशत्पटलः ३३

शरभस्थापनविधिः ३४

विषापहरणं वक्ष्ये स्थापनं परमेश्वर
सर्वमासेषु कर्तव्यं प्रतिष्ठायां विधीयते १
एकवक्त्रं त्रिणेत्रं च हरिणीटंकसंयुतम्
शरभं वृषसंयुक्तं गौरीकनिष्ठिकायुतम् २
शरभस्थापनं वक्ष्ये शृणुष्वेवं जनार्दन
उत्तरायणकाले तु स्थापयेच्छरभं मृगम् ३
वामनो गुह्यदेवेशं तत्सर्वं मम भू स्थितम्
तत्सत्व हृदयेन्मीशं शरभरूपस्य संगृहम् ४
शरभस्याकृतिं वक्ष्ये शृणुष्वेवं जनार्दन
द्विपादं व्यस्तकेशे तु श्वेतवर्णजटोद्धृतम् ५
त्रिणेत्रं किरणो ज्वालं किंशुकान् वनसंयुतम्
अरवारं जगद्धोषं क्रूरदृष्टिभयानकम् ६
क्षित्यादिकुटिलान्ते तु भ्रामयेच्छरभेश्वरम्
शरभौशानवक्त्रे तु सहस्त्रांशे तु जायते ७
वामनं सर्वदैवत्यमधिपं कारणेश्वरम्
तच्छिरं भ्रामयेदभ्रं क्षीराब्धिं मध्यतो सृजम् ८
स्थापनं सौम्य वारे तु स्थापयेत्सुमुहूर्तके
नेत्रस्य मोक्षणं कृत्वा पाषाणैः स्वर्णलोहजैः ९
पटे वा भित्तिचित्रे वा यथा वित्तानुसारतः
रत्नन्यासं प्रतिष्ठाप्य शरभं पन्नगाशनः १०

गुरुत्माकृतिदेवेशं स्थापयेच्छुद्धशैवकम्
जलतीरे प्रपां कृत्वा तत्रमध्ये तु विन्यसेत्  ११
पंचसप्तत्रिनाडीषु स्थापयेज्जलमध्यमे
उद्धृत्य भ्रमणं कृत्वा यागद्वारे प्रतिष्ठितम्  १२
ऐशान्ये यागसंकल्प्य चतुर्द्वारसमन्वितम्
यागशालामलंकृत्यां अंकुरार्पणमाचरेत्  १३
पंचाग्निं वेदिकोपेतं कल्पयेत्कल्पवित्तमः
पर्यग्निकरणं कृत्वा देशिकस्तु शिवद्विजः  १४
स्नापयेत्तर्पणं कृत्वा द्वारपूजां विशेषतः
सप्तविंशत्परिभ्राम्य वेदिकोर्ध्वे दशैस्सह  १५
चूताश्वत्थदळोपेतं वस्त्रकूर्चसमन्वितम्
अपिधानं च सर्वेषां स्थापयेद्देशिकोत्तमः  १६
निद्राकुंभं दशोपेतं स्थापयेत्कम्बळान्वितम्
शान्त्यादिद्वारदेवे तु पूजयेद् धूपदीपकैः  १७
वेदिकोर्ध्वे न्यसेत्सर्वमक्षवारिदहनानिलाः
खंजेति पंचकुंभे तु षडंगैश्च रसे घटम्  १८
अर्चयेद्धूपदीपं च होमकर्म समाचरेत्
पंचसंस्कारमार्गेण प्राधानबिन्दुसमन्वितम्  १९
होमन्तः श्वेतमूर्तिं च पंचाग्निं होमयेत्पुनः
वह्निस्थमूर्तिकुंभे तु योजयेद्ब्रह्मपंचकैः  २०
धूपदीपं त्रिधा भ्राम्य शयनवेदिं समाश्रितम्
कम्बळोर्ध्वे स्थितं देवं प्राक्शिरं स्थापयेत्स्थितम्  २१
न्यासपूजादिकं देशं सर्वं तत्रैव विन्यसेत्
शिवशक्तिरलाभे तु अनन्तादिशिखण्ड्यकम्  २२
धूपदीपञ्च नैवेद्यं होमयेत्तत्वखण्डवत्
बेरन्यासविधिं कृत्वा आत्मतत्वं च विद्यया  २३
शिवान्तं विन्यसेत्स्थानं जानुकुण्ठशिरोवधिः
षट्त्रिंशत्तत्वविन्यस्य त्रिखण्डाध्वा विशेषतः  २४
षडध्वं न्यासयेत्खण्डकेशवसृष्टि विन्यसेत्

मातृका न्यासमूलं च ज्ञेयमूले विचक्षरौः २५
प्रणवं नभसो वर्णं दीर्घबिन्दुस्वरान्वितम्
हौंकारं च पदं तत्र हंकारं शरभाय च २६
स्वाहान्तं विन्यसेन्मूलं विन्यसेत्तु विचक्षरौः
पंचाग्निं होमयेत्पश्चात् प्रतिसरं बन्धयेद्गळे २७
प्रभाते विधिवत्स्नात्वा पूर्ववत्पूजयेत्सुधीः
यागदेवेन्दु सर्वेषां पूर्ववद्विधिना सह २८
देवमुद्धृत्य द्वारे तु विन्यसेत्परया सह
निद्राकुंभं न्यसेच्छ्रेयं मूलस्थानेऽभिषेचयेत् २९
वर्धनीं पिरिडकाग्रे तु अनन्तादिशिरस्तथा
धूपदीपं परिभ्राम्य पूजयेत्पूर्वसंग्रहम् ३०
न्यासयेत्पूर्वमंत्रैस्तु विन्यसेच्छरभेश्वरम्
द्वारकुंभादिसर्वेषां पूर्ववत्पूजयेच्छिवम् ३१
होमयेत्संहिता मंत्रैः प्रत्येकं पंचसहस्रकम्
होमयेद्वह्निदेवे तु पूर्णान्ते कुंभयोजनम् ३२
द्वारकुंभान्विसृज्याथ दशकुंभं प्रदक्षिरौः
क्रिया ब्रह्मप्रयोगेरा स्थापनं ज्ञेयमूलकः ३३
धूपदीपं त्रिधा भ्राम्य मूर्तिकुंभं न्यसेच्छनैः
वर्धनीं गळदेशे तु अनन्तादीन्तळे न्यसेत् ३४
महादीपं त्रिधा संख्ये तु भ्रामयेद्दक्षिरणादिषु
परकाय प्रवेशं च नैवेद्यं महाहविस्तथा ३५
धूपदीपं नमस्कारं प्रकारे तु प्रदक्षिरणम्
देवालयं समासाद्य नित्यं पूजा समन्वितम् ३६
देशिकं दक्षिणां दत्वा वस्त्रहेमांगुळीयकैः
सारूप्यं संपदं प्राप्य सपुरयां गतिमाप्नुयात् ३७

इति पूर्वसहस्रे प्रतिष्ठापादे क्रियातन्त्रे
शरभस्थापनविधिरेकत्रिंशत्पटलः ३४

## दक्षिणामूर्तिस्थापनविधिः ३५

दक्षिणामूर्तिदेवस्य स्थापनं वक्ष्यते हरे
प्रतिमाणां तु सर्वेषां नृत्तं भैरवदेशिकैः १
भुजंगं स्वस्तिकं देवं दक्षिणामूर्तिदेव हि
उत्तरायणकाले तु सहमासं त्यजेद्विधिम् २
पटे वा भित्तिचित्रे वा लोहजे वाग्मजेऽपि वा
त्रिणेत्रं चतुर्भुजं शान्तं विकसिताळकवृन्तकम् ३
हरिणीटंकसंयुक्तं वल्लरीधारणं शिवम्
दक्षपादस्थितं पद्मं वामपादं तु स्वस्तिकम् ४
वटवृक्षस्य मूले तु श्यामळं शक्तिभिस्सह
श्यामळां द्विभुजां बालां दद्याच्चूर्णितलोचनाम् ५
पादन फेनं मेरुहस्तं च वामपार्श्वे प्रतिष्ठितम्
सुमुहूर्ते सुलग्ने च अंकुरां मंगळैस्सह ६
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत्
ग्रामप्रदक्षिणं कृत्वा जलमध्ये प्रतिष्ठितम् ७
पंचवर्णैश्च रत्नैश्च पंचलोहैश्च पिण्डकाम्
सुदृढं बन्धयेद्देवं प्रासादे तु प्रदक्षिणम् ८
ऐशान्ये नभस्वते देशे तु कल्पयेद्यागमन्दिरम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ९
पंचाग्निं वेदिका युक्तमुसूकाभासमन्वितम्
वेदिकाया न्यसेच्छालिं पद्माष्टदळशोभितम् १०
पूर्वादीशानपर्यन्तं सप्तविंशद्घटान्वितम्
शान्त्यादिदेवता न्यासं निद्राकुम्भदशान्वितम् ११
अर्चयेद्धूपदीपं च नैवेद्यं मध्यबिम्बवत्
अनन्तादिशिखण्ड्यन्तं मूर्ध्निदेवमुमा सह १२
प्रधाने वेदिकोपेतं शिवकुम्भस्य कर्करीम्
पूर्वादीशानपर्यन्तं विद्येशाष्टसमन्वितम् १३
धूपदीपं च नैवेद्यं उपचाराणि सर्वशः
होमयेत्पंचवह्निं च प्रत्येकं शतसहस्रकम् १४

वह्निस्थं कुंभपूर्णं च धूपदीपसमन्वितम्
बेरन्यासविधिं कृत्वा षट्त्रिंशत्तु षडध्वनि १५
किं तु तत्वत्रयं न्यासे होमयेद्धूपदीपवत्
प्रतिसरं बन्धयेद्देवं गीतवाद्यसमन्वितम् १६
रात्रौ निद्रां त्यजेत्सर्वं प्रातः काले तु विन्यसेत्
स्थानादिभूतशुध्यन्तं यागमन्त्येष्ट्यसर्वशः १७
पूजयेद्यागदेवेषु आहूयं पूर्ववत्क्रमात्
वह्निदेवे तु कुंभे तु बेरचित्रे निवेदयेत् १८
यागदेवेषु सर्वेषां पूर्ववद्वेद्यमेव च
देवमुद्धृत्य यागाग्रे स्नापयेत्स्नपनादिषु १९
शयनादिषु पंक्तीषु अभिषेकं च बन्धयेत्
होमयेद्दशसाहस्रं मूलमंत्रसमन्वितम् २०
पूर्वं कर्मं समुद्धृत्य बिन्दुनादसमन्वितम्
श्वेतवर्णाक्षरैरभ्रं सिन्दुधारीतमायया २१
दक्षिणामूर्तिमेवोक्तं स्वाहमू मूलमन्त्रवित्
होमयेत्पूर्णकुण्डे तु निक्षिपेद्धूपदीपकैः २२
त्रिखण्डं मूलजीवे तु स्थापयेच्चित्तदेशिकैः
धूपदीपं च नैवेद्यं मूर्तिकुम्भं प्रदक्षिणैः २३
मूर्तौ कुम्भं हृदिन्यस्य वर्धन्यास्तनमध्यमे
अनन्तादिशिखण्ड्यन्तं केसराग्रे निवेशयेत् २४
द्वारदेवान्विसृज्ये तु वस्त्रमावरणैस्सह
महाहविर्निवेद्यं च धूपदीपसमन्वितैः २५
प्राकारं तु प्रदक्षिण्यां जालये तु पुनर्गतिः
शान्तिहोमं शतं हुत्वा देशिकं पूर्णमानसम् २६
देशिकं पूजयेत्पश्चाद्वस्त्रहेमांगुळीयकैः
सायुज्यमश्नुते पुण्यात्सत्यं सत्यं जनार्दन २७

मूलमन्त्रं ओं हां ह्रीं दक्षिणामूर्तये स्वाहा

इति पूर्वसहस्रे प्रतिष्ठातन्त्रे क्रियापादे
दक्षिणामूर्तिदेवस्थापनविधिर्द्वात्रिंशत्पटलः ३५

## किरातस्थापनविधिः ३६

किरातस्थापनं वक्ष्ये शृणुष्वेवं महेश्वर
दक्षयज्ञकुळेशं च स्थापयेद्देशिकोत्तमैः  १
उत्तरायणकाले तु सुवारे च सुलग्नके
अनेकानेकभेदेषु शाखाया चन्द्रकान्तवत्  २
देवतालोकपाषाणैः पटे वा भित्तिचित्रकैः
एकवक्त्रं त्रिणेत्रं च जटायज्ञोपवीतिनम्  ३
हरिणीटंकचापन्तु शरपाणं चतुर्भुजम्
नीलप्रवाळवर्णे तु स्वरबा वा दळोर्ध्वके  ४
शुक्लयज्ञोपवीतं च श्वेतमाल्यानुभूषितम्
विष्णुर्वामपरे स्थाने चक्रधारं सुशोभितम्  ५
स्वयंभुर्दक्षिणे भागे पादुकां धारयेद्विधिः
सुमुहूर्ते सुलग्ने तु अंकुरार्पणमाचरेत्  ६
नेत्रयुग्मयुते क्षेत्रे नेत्रोन्मीलनमाचरेत्
स्थपतिस्थापकोपेतमुन्मीलेन समन्वितम्  ७
जलतीरे प्रपां कृत्वा जलमध्ये प्रतिष्ठितम्
मुखधातुरखण्डेन्दु स्थापयेज्जलमध्यमे  ८
ग्रामप्रदक्षिणं कृत्वा देवालये पुनर्गतिः
ऐशान्ये मण्डपं कल्प्य चतुर्द्वारसमन्वितम्  ९
पंचाग्निं वेदिकोपेतमुपवेदसमन्वितम्
यागवास्तुं हुनेत्पश्चात् पर्यग्निकरणं तथा  १०
संमार्जलेपनं कृत्वा स्थापयेदन्यतण्डुलैः
वेदिकोर्ध्वे न्यसेच्छालिं पद्माष्टदळसंयुतम्  ११
विष्टरं ब्रह्मदण्डे तु तदूर्ध्वे मध्यमच्छिवम्
शिवकुंभं प्रतिष्ठाप्य पूर्वादिवसुमृद्धटम्  १२
अनन्तादिशिखण्ड्यन्तं पूजयेत्स्वस्वनामभिः
पूर्वादीशानपर्यन्तं सप्तविंशद्धटान्वितम्  १३
शान्त्यादिद्वारपालांश्च पूजयेत्स्वस्वनामभिः
धूपदीपं च गन्धे तु पुष्पं नैवेद्यमेव च  १४

धूपदीपं च मारात्रिमुपचाराणि सर्वशः
पंचकम्बलवेदि स्यात् पश्चिमे विन्यसेच्छिवम् १५
अष्टमृत्कर्षरत्नाढ्यात् बीजसोमेश्वरौ भिषक्
श्वेतवस्त्रेणमाच्छाद्य प्राक्छिरं विन्यसेत्सह १६
कुण्डसंस्कारपूर्वोक्तं होमयेच्छुद्धशैवकम्
शुद्धशैवेन कर्तव्यं प्रतिष्ठाद्युत्सवान्तकम् १७
अन्यशैवेन कर्तव्यं राजराष्ट्रं विनश्यति
होमयेत्पंचकुण्डे तु प्रत्येकं पंचसहस्रकम् १८
वह्निस्थं जीवसंयुक्तं मूर्तिकुम्भे नियोजयेत्
पुनः कुण्डाम्भसा प्रोक्ष्य होमं पंचसहस्रकम् १९
शयनं वेदिमाश्रित्य पूजयेन्न्यासकर्मणि
पृथ्व्यप्तेजो मरुच्चैव वियद्दंधोरळत्यपि २०
मंत्रन्यासविधिस्सर्वं तत्वमंत्रे च मूलवत्
ओंकारं पूर्वमुद्धृत्य अम्बरं वर्णमेव च २१
बिन्दुनादसमायुक्तं हौंकारस्य संपुटम्
हं ह्वामखिलेशं च स्वाहान्तं होमकर्मणि २२
होमयेद्दशसाहस्र त्रिखण्डं होमयेत्पुनः
जानुकण्ठशिरः स्थाने त्रिखण्डं कल्पयेत्पुनः २३
धूपदीपं च नैवेद्यं जीवन्यासं च प्रत्युषम्
नृत्तगीतं च वाद्येषु रक्षाबन्धनमेव च २४
यामिनी जागरं कृत्वा प्रत्युषं स्नानमाचरेत्
तर्पणं पूर्ववज्जप्यं शुचिर्भूत्वा जितेन्द्रियः २५
यागद्वारे समाश्रित्य करन्यासं च पूर्ववत्
भूतमन्तर्बहिन्र्यासे जीवन्यासेषु विन्यसेत् २६
शान्तिनन्दिमहाकाळौ युग्मपंक्तिश्च मातृभिः
धूपदीपं परिभ्राम्य वेदिकायां च पूजयेत् २७
शिवकुंभाष्टविद्येशान्पूजयेन्मूलमंत्रवित्
नैवेद्यं धूपदीपं च आरात्रिकसमन्वितम् २८
शयनवेदिं समाश्रित्य पूजयेत्स्वस्वनामभिः

पूर्वादीशानपर्यन्तं पूजयेद्धूपदीपकैः २९
पूर्ववन्न्यासयेद्बिम्बं पूर्ववत्तत्वखण्डवत्
देवमुद्धृत्ययागोर्ध्वे अभिषेकं च गव्यकैः ३०
पंचामृतेन रोच्ये तु मर्दनं द्वारपादवत्
शयनकुंभं तु संग्राह्य अभिषिच्य तु मूलवित् ३१
अनन्तादिशिरस्थाने अभिषिच्य स्वनाम्नवत्
धूपदीपं परिभ्राम्य अलंकृत्य हुतं पुनः ३२
होमयेत्पंचकुण्डे तु प्रत्येकं दशसहस्रकम्
मूलमंत्रेण संपूज्य होमयेत्तु पुनः पुनः ३३
तद्बेरमुत्कषोपेतं स्नापयेत्तदनन्तरम्
शुद्धवस्त्रेण माच्छाद्य पिण्डकोर्ध्वे तु विन्यसेत् ३४
वह्निस्थं मूर्तिकुंभे तु योजयेत्तस्य मेव तु
पुनः कुण्डाम्भसा प्रोक्ष्य होमयेत्त्रिंशषध्वनेत् ३५
मूलमंत्रेण संयोज्य अष्टत्रिंशत्कला न्यसेत्
वह्निदेवान्नमस्कृत्य मूर्तिं स्वान्ते नियोजयेत् ३६
द्वारदेवान्विसृज्याथ अन्तर्बलिसमन्वितम्
शिवकुंभाष्टविद्येशो प्रासादं तु प्रदक्षिणम् ३७
देवाग्रे स्थापयेत्कुंभं वस्त्रदर्भोर्ध्वमेव च
धूपदीपं च नैवेद्यं मुखवाससमन्वितम् ३८
देवं नियोज्य मंत्रेण षट्त्रिंशत्तत्वकोध्ववित्
श्रीकण्ठश्च कलान्यासं विन्यसेत्तु विचक्षणः ३९
आसनं मूर्तिमूलं च विन्यसेद्धूपदीपकम्
शिवकुंभं समुद्धृत्य ब्राह्मणैः स्वस्तिवाचकैः ४०
मूलंमंत्रेण संपूज्य हृद्यस्थाने शिवाणुना
नैवेद्यं धूपदीपं च स्थापनं संनिधानकम् ४१
विद्येशानष्टकुंभे तु घण्टिकाया दळाग्रवत्
अभिषिच्य धूपदीपं च संनिरोधनमेव च ४२
अवकुण्ठनपंचैते क्रियाब्रह्मक्रमान्न्यसेत्
रक्तवस्त्रधरं देवं रक्तमाल्यानुभूषितम् ४३

पंचावरणमार्गेण धूपदीपादिभिश्शिवम्
महाहविर्निवेद्यं च मुखवाससमन्वितम् ४४
ताम्बूलं दर्पणं दद्यान्नीराजनसमन्वितम्
देशिकः प्रियवस्त्रं च गन्धमाल्यानुलेपनम् ४५
आचार्यमनसाप्रीति बेरयात्रासमन्वितम्
नानावाद्यसमायुक्तं नानाघोषसमन्वितम् ४६
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
पश्चिमाभिमुखं देवं सद्यवक्त्रोद्भवं हरम् ४७
नित्यपूजावसाने तु मूलमंत्रेण संयुतम्
नीराजनविधिं नित्यं नैवेद्यं धूपदीपकम् ४८
उपचाराणि सर्वेषां नित्यं नित्यं पुनः पुनः
किरातस्थापनं प्रोक्तं चण्डेशानुग्रहं शृणु ४९
इति पूर्वसहस्रे क्रियापादे प्रतिष्ठातन्त्रे
किरातस्थापनविधिस्त्रयस्त्रिंशत्पटलः ३६

## चण्डेशानुग्रहविधिः ३७

चण्डेशानुग्रहं वक्ष्ये स्थापनं सर्वमासके
उत्तरायणकाले तु स्थापयेच्छुद्धशैव हि १
शुद्धशैवैः प्रकर्तव्यं कर्षणादिप्रतिष्ठितम्
त्रिणेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम् २
पाशटंकाभयं चैव वरदं वामपाणिभिः
आदिशक्तिसमोपेतं कृष्णनागोपवीतिनम् ३
सिंहासनसंयुक्तं नानाभरणभूषितम्
श्यामळं खड्गखेटं च वामपार्श्वे प्रतिष्ठितम् ४
पटे वा भित्तिलोहे वा शिलायां प्रस्तरेपि वा
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत् ५
दधिमधुघृतं चैव दर्शयेद्देशिकोत्तमः
अंकुरार्पणपूर्वं तु पूजयेत्तु गणेश्वरम् ६
पुण्याह प्रोक्षणं कृत्वा बेरशुद्धिमथाचरेत्

अष्टमृत्युकषायाद्यैः स्नापयेत्पीठबन्धनम् ७
जलमध्ये प्रतिष्ठाप्य पंचसप्तत्रिनाडिका
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ८
ऐशान्ये मण्टपं प्रोक्तं चतुर्द्वारसमन्वितम्
मूर्तिस्तंभसमायुक्तं पंचाग्निर्वेदिकैस्सह ९
पुण्याहप्रोक्षणं कृत्वा स्थापयेत्कुंभसंयुतम्
शालिभिःस्थण्डिलं कृत्वा साष्टपत्रं सकर्णिकम् १०
पूर्वादीशानपर्यन्तं भ्रामयेत्सप्तविंशतिः
सप्तविंशद्घटे भ्राम्य पूजयेत्स्वस्वनामभिः ११
पंचाग्निं होमयेत्पश्चात् वेदिकोर्ध्वे दशं न्यसेत्
मध्ये सदाशिवं कुंभं ऐशान्ये आदिशक्तिभिः १२
अभितः कलशानष्टौ पूजयेदष्टविद्यसु
मंत्रन्यासविधिं न्यस्य न्यासयेत्कुंभमूर्तिषु १३
शयनवेदिषु तन्मध्ये भ्रामयेद्दशकुम्भकम्
मध्ये बिम्बं प्रतिष्ठाप्य प्राक्छिरश्छाययेच्छिवम् १४
नैवेद्यं धूपदीपं च होमकर्म पुनः पुनः
होमयेत्पंचकुण्डेषु प्रत्येकं नृसहस्रकम् १५
होमयेद्बलिसंयुक्तं वह्निदेवं च गड्डुकैः
कुण्डमस्त्रेण संप्रोक्ष्य होमयेत्पूर्वसंख्यया १६
होमयेद्वेरहृद्येषु षट्त्रिंशत्तत्वमीश्वरम्
षडध्वन्यासयेत्खण्डे त्रिखण्डाध्र्वा तु विन्यसेत् १७
किं तु तत्वद्वयन्यासे जानुकण्ठशिरोवधिः
न्यासयेद्वेरमध्ये तु होमयेत्पूर्ववज्जुषम् १८
रक्षाबन्धनहस्ते तु नैवेद्यं धूपदीपकम्
पुण्याहप्रोक्षणं कृत्वा अपरे पूर्ववत्क्रमात् १९
गीतनृत्तं च वाद्येषु रात्रौ निद्रां विवर्जयेत्
प्रभाते विधिवत्स्नात्वा यागपूजान्तु पूर्ववत् २०
पूर्ववद्बिम्बमुद्धृत्य यागद्वारे प्रतिष्ठितम्
स्नपनं पंचविंशत्या रुद्रैश्चैवाभिषेचनम् २१

होमं षट्त्रिंशत्तत्वेषु त्रिखरगडं कल्पयेत्पुनः
होमयेत्संहितामंत्रैः प्रत्येकं शतदिक्क्षिपेत् २२
होमयेत्पंचकुरगडे तु प्रत्येकं च सहस्रकम्
द्वारपालादिसर्वेषां योजनं नाम मंत्रकैः २३
होमे रसादिरध्वे तु षट्त्रिंशत्तत्वं तु स्वरम्
पूर्णान्तं बलिमंत्रेण योजयेत्पंचवक्त्रवत् २४
पंचब्रह्मषडंगैश्च पंचमूर्तिस्वरान्वितम्
पंचतत्वकले भूतं पंचार्णं पंचविंशतिम् २५
होमयेत्संहितामंत्रैः योजयेन्मूलमेव च
मूलमंत्रक्रमं वक्ष्ये शृणुष्वेवं महेश्वर २६
प्रणवं पूर्वमुद्धृत्य प्रष्टरो वर्णदीर्घकम्
बिन्दुनादसमायुक्तं चरगडेशानुग्रहाय च २७
स्वाहान्तं मंत्रवद्धृत्वा प्रत्येकं शतसंख्यया
पूर्णान्तं मन्त्रविध्युत्वा मूर्तिं कुंभसुयोजयेत् २८
धूपदीपं त्रिधा भ्राम्य प्रोक्षयेत्कुरगडवारिभिः
पुनस्संहारसद्यान्तं ईशान्तं वा हुनेत्पृथक् २९
होमयेद्बलिसंयुक्तं द्वारपालादिदेवतम्
नैवेद्यं धूपदीपं च मुखवाससमन्वितम् ३०
मूर्तिकुंभं दशोपेतं नैवेद्यं धूपदीपकम्
पंचोपचारसंयुक्तं द्वारदेवान्विसर्जयेत् ३१
मूर्तिकुंभं परिभ्राम्य प्रसादे तु प्रदक्षिणम्
नैवेद्यं धूपदीपं च ब्राह्मणान्स्वस्तिवाचकैः ३२
मूर्तीनां हृदये देशे अभिषेकं द्विजोत्तमैः
अनन्तादिशिखरगड्यन्तान्पिरिगडकाया दलेष्वपि ३३
वस्त्रेण वेष्टयेद्धीमान् माल्यगन्धमलंकृतम्
नैवेद्यं नवनैवेद्यं योजयेन्मुखवासनम् ३४
ताम्बूलं धूपदीपं च आरात्रिकसमन्वितम्
सर्वोपचारमार्गेण दर्शयेद्धेनुसंयुतम् ३५
प्रासादं वास्तुमावृत्य भ्रामयेज्जगदीश्वरम्

वाद्यगीतं च नृत्तेषु संध्यानृत्तं दिशां प्रति ३६
आलयं तु प्रविश्याथ पश्चिमाभिमुखस्थितम्
नित्यपूजादिकं सर्वं मूलमन्त्रेण देशिकः ३७
उपद्वाराणि सर्वेषां नित्यं नीराजनान्वितम्
आचार्यमनसा प्रीतिः शिवसायुज्यमाप्नुयात् ३८
सायुज्यस्थापनं सर्वं समीपमर्चने सह
सारूप्यं योगभावे तु सायुज्यस्सर्वदाशिवम् ३९
चण्डेश्वरानुग्रहं प्रोक्तं वटुकस्थापनं शृणु ४०
इति पूर्वसहस्रे प्रतिष्ठातन्त्रे क्रियापादे चण्डेशानुग्रहस्थापनविधिः
चतुस्त्रिंशत्पटलः ३७

वटुकभैरवस्थापनविधिः ३८

वटुकस्थापनं वक्ष्ये शृणुष्वेवं जनार्दन
उत्तरायणकाले तु सुमुहूर्ते सुलग्नके १
अंकुरं पूजयेद्विद्वान् सुमुहूर्ते विशेषतः
देवरूपाकृतिं वक्ष्ये शृणुष्वेवं चतुर्भुज २
एकवक्त्रं त्रिणेत्रं च सिंहारूढं सुभीषणम्
कपालदण्डहस्तं च कटिसूत्रं च मंकुशम् ३
चित्रवस्त्रधरं चैव नागयज्ञोपवीतिनम्
मुण्डमालाधरं देवं समदृष्टिं तथैव च ४
एवं ध्यात्वा विशेषेण आपदुद्धारभैरवम्
सुवारे सुतिथौ ऋक्षे दृष्टिमण्डलमालिखेत् ५
पंचषण्मुनिनाडीं वै विन्यसेज्जलमध्यमे
ग्रामप्रदक्षिणं कृत्वा यागशालेळिपीडितम् ६
षट्त्रिंशद्धस्तसंयुक्तं मूर्तिस्तंभसमन्वितम्
मध्ये वेदिं प्रतिष्ठाप्य पंचाग्निं भ्रामयेत्सुधीः ७
गोमयालेपनं कृत्वा मुक्तादामैरलंकृतम्
रम्भादिचूतमश्वत्थं चतुर्द्वारे प्रतिष्ठितम् ८
शालिभिः स्थण्डिलं कृत्वा तिललाजसमन्वितम्

वासोर्ध्वे विन्यसेत्पद्मं साष्टपत्रं सकर्णिकम् ९
पूर्वादीशानपर्यन्तं भ्रामयेत्सप्तविंशकम्
सप्तविंशद्घटे स्थाप्यं शान्त्यादिद्वारदेवताः १०
वासोर्ध्वे विन्यसेत्कुंभं द्रोणद्वयजलान्वितम्
पूर्वादीशानपर्यन्तं कर्करीमूर्तिसंयुतम् ११
ऐशान्ये वर्धनीं कृत्वा भ्रामयेत्कुंभसंयुतम्
चूताश्वत्थदलं कृत्य नाळिकेरसुवर्णकैः १२
शयनवासं समीपे तु दशकुम्भांश्च विन्यसेत्
पंचकम्बलमूर्ध्वे तु विन्यसेद्वटुकेश्वरम् १३
स्नापयेद्धोतृभिः सार्धं पंचांगभूषणैस्सह
यागद्वारे समाश्रित्य रुचिरासनमेव च १४
सामान्यं कल्पयेद्विद्वान् प्रोक्षयेद्यागमन्दिरम्
शान्त्यादिद्वारपालांश्च पूजयेद्धूपदीपकैः १५
वेदिका दक्षिणे भागे भूतशुध्यन्तरीयताम्
वासोर्ध्वे मूलमंत्रैश्च षट्त्रिंशत्तत्वसंहितैः १६
षडध्वन्यासयेन्मूल +++ मन्त्रेण वाहनम्
रक्तवर्णं त्रिणेत्रं च सिंहवाहनरूढकम् १७
हरिणीटंकसंयुक्तं कटिसूत्रं कमण्डलुम्
कोटिसूर्यप्रतीकाशं स्थापयेत्कुम्भमध्यमे १८
क्रियाब्रह्मप्रयोगेण हेतुसंहितसंहितैः
नैवेद्यं धूपदीपं च पूजयेद्वर्धनी सह १९
वर्धनीं द्विभुजां ध्यात्वा करण्डमकुटान्विताम्
खड्गखेटकहस्तां च श्यामवर्णां च शान्तयुक् २०
रौद्रीं च भावयेद्विद्वान् विन्यसेत्कर्करीं हृदि
पूर्वादीशानपर्यन्तं असितांगादिभैरवम् २१
ब्राह्मी माहेश्वरी सप्त चण्डिकान्नाळिकेरवत्
नासिका घटमध्ये तु असितांगं प्रतिष्ठितम् २२
तत्तद्घटोर्ध्वे मातृभिश्चण्डीमूले तु हेतुकैः
दशपालान्प्रपूज्यन्ते धूपदीपं निवेदयेत् २३

होमयेत्पंचवह्निषु क्षिपेत्पंचसहस्रकम्
पूर्ववन्मनुनां सर्वे होमयेन्मूर्तिकुम्भवत् २४
धूपदीपं च नैवेद्यं उपचाराणि दापयेत्
बेरमष्टकषायैस्स्यात् मृत्युरत्नं च गन्धवत् २५
स्नापयेत्पंचगव्येन तिंत्रिणीमर्दनान्वितम्
स्नापयेद्रोचनोपेतं प्राक्शिरञ्च यजेच्छिवम् २६
अन्यथा स्थापयेद्देवं मंत्रन्यासं च पूर्ववत्
दर्भकूर्चं च शिरसि विन्यसेद्देशिकोत्तमैः २७
निद्राकुम्भं शिवं ध्यात्वा कपालं ब्रह्मदण्डवत्
द्विनेत्रं शान्तवदनं किंचित्प्रहसिताननम् २८
निद्रादेवं समभ्यर्च्य अनन्तादिशिखण्डयकम्
होमयेच्छ्रोतृभिस्सार्धं मूलमंत्रेण मंत्रवित् २९
प्रणवं बिन्दुनादं च मायाबीजसमन्वितम्
वटुकाय नमः स्वाहा मूलमन्त्रसमन्वितम् ३०
नैवेद्यं धूपदीपं च न्यासयेत्तत्वपूर्वकम्
श्रीकण्ठं तत्वमात्रस्यान्मन्त्रन्याससमन्वितम् ३१
षडध्वन्यासयेत्सर्वं त्रिखण्डाध्वा तु विन्यसेत्
जानुकण्ठशिरस्थाने आत्मविद्याशिवान्तकम् ३२
प्रतिसरं बन्धयेद्देवं रात्रौ निद्रां विवर्जयेत्
प्रत्युषस्थापकोपेतैः स्नापयेद्धोतृभिस्सह ३३
यागद्वारे समाश्रित्य यागपूजे तु पूर्ववत्
पूर्वादीशानपर्यन्तं होमतर्पणतत्परैः ३४
निद्रादेवं समुद्धृत्य स्नापयेदुदकादिभिः
मंत्रन्यासं कलान्यासं अष्टत्रिंशत्कला न्यसेत् ३५
तत्वत्रयं न्यसेत्पश्चाद् धूपदीपं निवेदयेत्
पूर्ववद्युपचारैस्तु होमयेत्पूर्वसंख्यया ३६
पूर्णान्तं वह्निदेवे तु कुम्भमूर्तिं नियोजयेत्
स्थापनं संनिधानं च संनिरोधनमेव च ३७
अवकुण्ठनपंचैते महायोनिं प्रदर्शयेत्

पुनः कुण्डाम्भसा प्रोक्ष्य कुण्डमध्ये तु भैरवम्  ३८
कुण्डाग्रे सप्तधातुं स्याद्दिशि देवं च मातृभिः
असितांगादि सर्वेषां मेखलोपरि विन्यसेत्  ३९
न्यासयेत्संहिता मंत्रैः होमयेदुपचारकैः
धूपदीपं च नैवेद्यं दापयेन्मूलमंत्रकैः  ४०
शतमूर्तिं हुनेत्पश्चात् तत्तन्मन्त्रेण देशिकः
देवाग्निं बिम्बमध्ये तु कोटिसूर्यसमप्रभम्  ४१
स्थापनं संनिधानं च संनिरोधनमेव च
नैवेद्यं धूपदीपं च उपचारसमन्वितम्
द्वारदेवादिसर्वेषां पूर्वस्थाने नियोजयेत्  ४३
द्वारस्य पुरतो सिंहं पीठं चैव निवेशयेत्
शंखकाहळवाद्येषु ब्रह्मभेरी तु झल्लरीम्  ४४
मर्दळैर्भेरिको ब्रह्म भेरीघोषसमन्वितम्
हर्म्ये प्रदक्षिणं कृत्वा बेराग्रे वस्त्रवेष्टितम्  ४५
कुम्भदेवं प्रतिष्ठाप्य नैवेद्यं धूपदीपकैः
ब्राह्मणान्स्वस्तिवाच्यैस्तु पंचशान्तिश्च घोषणैः  ४६
मूर्तिकुंभं समुद्धृत्य स्नापयेद्धृदयान्वितम्
अभितः कर्करीमूर्तिं दळमध्ये तु विन्यसेत्  ४७
रक्तवस्त्रधरं देवं नानाभरणभूषितम्
सुगन्धपुष्पैः कह्लारैः दापयेदुपचारकैः  ४८
धूपदीपं च नैवेद्यं महाहविर्निवेदयेत्
ताम्बूलं मुखवासं च धूपदीपनिवेदितम्  ४९
नीराजनविधिस्सर्वमुपचाराणि सर्वशः
उत्सवं पूर्ववत्कुर्याद् ध्वजे सिंहसमुद्भवेत्  ५०
रक्तान्नं मांससंयुक्तं शकटोर्ध्वे बलिं स्थितम्
त्रिशूलेन सहोपेतं गन्धपुष्पजलान्वितम्  ५१
पारशैवं शुचिर्भूतमन्यथा राजपुत्रवत्
शिरो बन्धनकरैश्शूलं देवोर्ध्वे शकटस्य च  ५२
वटुके तु सहोपेतं ग्राममध्याभ्रमेण तु

पूर्वादीशानपर्यन्तं भैरवं बलिनिक्षिपेत् ५३
असितांगो रुरुश्चराडः क्रोधश्चोन्मत्तभैरवः
कपाली भीषराश्चैव संहारेशानमेव च ५४
तत्तद्देशे त्रिशूलेन भ्रामयेत्तत्र मंत्रिणाम्
शेषान्नं भूतवेताळपिशाचब्रह्मराक्षसाः ५५
काळिकोष्ठौ श्मशाने स्याच्छेषानां बलिनिक्षिपेत्
वास्तुशुद्धिः प्रदातव्यं काळिकोष्ठे बलिं क्षिपेत् ५६
देवालयं समाश्रित्य दक्षिणाभिमुखं शिवम्
पूजयेद्धूपदीपं च मुखवाससमन्वितम् ५७
नित्यं नीराजनोपेतमिष्टकाम्यार्थसिद्धिदम्
देशिकं वस्त्रधेनुश्च गोभूहिरण्यमेव च ५८
हेमांगुळी तु निष्कं स्याद्दशनिष्कं प्रदापयेत्
आचार्यमनसा प्रीतिः शिवसायुज्यमाप्नुयात् ५९
शुद्धशैवे तु कर्तव्यं धनधान्यसमृद्धिदम्
अन्यथावर्जयेच्छैवं राजराष्ट्रं विनश्यति ६०
इति पूर्वसहस्रे प्रतिष्ठातान्त्रे क्रियापादे वटुकभैरवस्थापनविधिः
पंचत्रिंशत्पटलः ३८

३९

अथातस्संप्रवक्ष्यामि वीरेशस्थापनं परम्
शत्रुघ्नं भूतवेताळैः ब्रह्मविष्णुशरोभजम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
माघमार्गयुते मासे वर्जयेद्देशिकोत्तमः २
भौमादित्यशनैर्वारो चतुर्थी तिथिसंयुतम्
षष्ठी नवम्य वर्ज्यन्ते चतुर्दशी सहमेव च ३
स्थिरोभयात्मलग्नं च दृष्टिं नक्षत्रसंयुतम्
अंकुरार्पयेत्पूर्वं नयनोन्मीलनं तथा ४
जलाधिवासमेवोक्तं रक्षाबन्धनकर्मणि
मंत्रन्यासं च होमेन जीवन्यासं च न्यस्तयुक् ५

कुंभाभिषेकनैवेद्यं प्रतिष्ठायां विधीयते
दृषत्कृष्णकठीन्यस्य निमित्तं शरभाकृतिः ६
श्वेतवर्णं चतुर्बाहुं जटामकुटमण्डितम्
मृगीटं ककरे युग्मं वल्लकी नादघोषणैः ७
शार्दूलचर्मवसनं मुक्तारूपं विशेषतः
श्यामवर्णं चतुर्बाहुं खड्गखेटकधारिणम् ८
प्राजापत्यऋषिस्सर्वे अक्षिलेखनमेव च
अक्षमाला तु धारिणां मुण्डमालाविभूषितम् ९
अन्यत्र बाहुरूपंच द्वात्रिंशल्लक्षणैर्युतम्
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत् १०
जयमंत्रं समुच्चार्य घृतेनैव मधुस्तथा
नदीतीरे तटाके च सप्तरात्रिं तथैव च ११
सप्तनाडी जले स्थाप्य उद्धृते भ्रमणेऽपि च
यागमण्टपमासाद्य षोडशं द्वादशे करम् १२
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
मंगळाष्टपताकस्यान्मध्ये वेदीं प्रकल्प्य च १३
नवाग्निं चैव पंचाग्निं दर्पणोदरसंनिभम्
धनुरश्रे प्रधाने च कल्पितं देशिकोत्तमः १४
अलंकृत्य विशेषेण संस्कार्यं च चतुर्दशौ
प्रोक्षणं पंचगव्येन पर्यग्निं च हुनेच्छतम् १५
पाशुपतेन समभ्यर्च्य भ्रामयेत्तु विचक्षणैः
अंकुरार्पणपूर्वे तु बेरशोधनमेव च १६
पूर्वादीशानपर्यन्तं भ्रामयेत्कर्करी शतम्
वेदिकोर्ध्वे न्यसेद्व्रीहितण्डुलैस्तिललाजकैः १७
दळाष्टकसमोपेतं दर्भैः पुष्पैः परिस्तरेत्
तदूर्ध्वे विन्यसेत्कुंभं पूर्वपश्चिममुत्तमम् १८
दक्षिणे दिशि तद्भागे तन्मध्ये कर्करी सह
षट्कुंभं विन्यसेत्सूत्रं वस्त्रकूर्चसमन्वितैः १९
अभिधानं च रत्नेषु नालिकेरं च पत्रवत्

शुद्धशैवे तु कर्तव्यमनुक्तमन्यथान्वितम्  २०
स्नानकर्मणि संप्राप्ते तर्पणं च विशेषतः
शान्तिभूतिबलं चैव आरोग्यमर्चयेत्सुधीः  २१
विंशत्कुंभार्चने कृत्वा दिव्यदृष्टिनिपाततः
वरुणादिनिर्ऋत्यन्तं पश्चिमद्वारमादिषु  २२
वरुणादिराक्षसान्तं च असितांगादिभिस्सह
ब्रह्मविष्णुससूरं च ऐशान्यां गुरुपादुकम्  २३
पूर्वे वा दक्षिणे वापि पश्चिमे चोत्तरेऽपि वा
युग्मायुग्मं न्यसेद्विद्वान् चतुष्कोणे चतुष्टयम्  २४
पूर्वद्वारे द्वये कुंभे इन्द्रादीन्भैरवाष्टकम्
गणपतिं क्षेत्रपालं च दुर्गायां वटुकं तथा  २५
अभ्यर्च्य गन्धपुष्पाद्यैः धूपदीपं त्रिधान्वितम्
वेदिको दक्षिणे भागे भूतशुध्यन्तर्युताम्  २६
विशेषार्घ्यं समभ्यर्च्य वेदिको रसनादिभिः
तदूर्ध्वे दिशकुंभेषु शान्त्यतीतेन ईशकैः  २७
पूर्वे वा कुंभमभ्यर्च्य पुरुषं कुंकुमप्रभम्
दक्षिणे घोरमभ्यर्च्य उत्तरे वामकेश्वरम्  २८
सद्येन पश्चिमे कुंभे अर्चयेद्धूपदीपकैः
पंचमुद्रां प्रदृश्यन्ते मध्यपाताळधोमुखम्  २९
तन्मुखं वीरभद्रेशं दशबाहुं किरीटकम्
प्रळयसंहाररुद्रं च प्रळयसंहारमंत्रवित्  ३०
आदिवृत्ताक्षरं प्रोक्तं मन्त्रेणैव समर्चितम्
संहारवीररुद्रेशं विश्वतश्चक्षुरेव च  ३१
विश्वतो बाहुसंभूतं ध्याययेद्विश्वमूर्तिषु
अभ्यर्च्य गन्धपुष्पाद्यैः संहितामनुमर्चितम्  ३२
आदिप्रासादमन्त्रेण अर्चयेद्धूपदीपकैः
नैवेद्यं च गुळान्नस्य दधिक्षीरं च चण्डितम्  ३३
होमयेत्पंचशुद्धिं च होमयेत्तु सहस्रकैः
प्रत्येकं शतसहस्रं आहुतिं च पृथक्पृथक्  ३४

समिधा सद्यमन्त्रेण चरुं वामेन होमयेत्
घृतं वै घोरमन्त्रेण क्षीरमीशानसंयुतम् ३५
ओषधिद्रव्यसंयुक्तं पुरुषेणैव होमयेत्
सर्वद्रव्येन संयुक्तं पाताळं वसवाहुतिः ३६
धूपदीपं तथा दत्वा तत्पूर्वे शालितण्डुलैः
दर्भैः पुष्पैः परिस्तीर्य तदूर्ध्वे प्राक्छिरोर्ध्वकम् ३७
पंचकम्बळतन्मध्ये शान्तिकुंभेन निद्रयुक्
स्त्रुक्कुंभं च त्रिधास्थाप्य आत्मविद्याशिवान्तकम् ३८
अभ्यर्च्य गन्धपुष्पाद्यैः न्यासकर्म समाचरेत्
प्रतिसरं बन्धयेत्कृत्वा पीठं रूपमुदाहृतम् ३९
धूपदीपं परिभ्राम्य न्यासकर्म विशेषतः
आत्मविद्या शिवान्तञ्च षट्त्रिंशत्तत्वसंयुतम्
अष्टत्रिंशत्त्रिखण्डाध्वा श्रीकण्ठादिसमन्वितम्
मातृका न्यासमेवोक्तमन्तर्बहिषडध्वयुक् ४०
पंचब्रह्मकलैर्युक्तं क्ष्मावारिदहनानिला
खण्डेन्दुमूर्तिभूतं च अष्टपक्षे न्यसेत्तथा ४१
क्ष्मावह्नियजमानार्क जलवायुनिशाकर
व्योमान्तं मूर्तयश्चाष्टौ न्यस्तव्य प्रतिखण्डकैः ४२
शर्वः पशुपतिश्चोग्रो रुद्रश्चैव भवस्तथा
ईशानश्च महादेवो भौमश्चेत्यष्टमूर्तिपाः ४३
किं तु तत्वत्रयं न्यासो जानुकण्ठशिरोवधि
होमयेत्पूर्ववत्कृत्वा रात्रौ निद्रां विवर्जयेत् ४४
प्रभाते विधिवत्स्नात्वा जपानुष्ठानतर्पणैः
पूर्ववत्पूजयेत्कुंभे होमयेत्पूर्ववत्क्षिपेत् ४५
बलिहोमं च सर्वेषां तद्वेरस्थापनं विधिः
पिण्डक शक्तिमभ्यर्च्य कर्णिकेऽनन्तमर्चयेत् ४६
पंचरत्नेन वा तस्मिन् सुवर्णं वा यथौषधिः
सुमुहूर्ते सुलग्ने च स्थापनं पिण्डकान्वितम् ४७
पुण्याहप्रोक्षणं कृत्वा गर्भगृहमलंकृतैः

स्थापयेत्पंचबन्धैश्च होमयेत्तु यथाहुतिः ४८
पूर्वस्याभिमुखं देवं पश्चिमे उत्तरेऽपि वा
पूर्ववद्यागदेवेषु अभ्यर्च्य गन्धपुष्पकैः ४९
नैवेद्यं धूपदीपं च होमकर्म तु पूर्ववत्
मंत्रन्यासविधिः पूर्वं विन्यसेद्भावनान्वितम् ५०
जीवन्यासं शिखण्डाध्वा संनिरोधचतुष्टयम्
तैलस्नानादिगव्येषु स्नापयेच्छरभेश्वरम् ५१
धौतवस्त्रेण उन्मृज्य स्नपनं पंचविंशतिः
होमयेच्छान्तितद्युक्तं धूपदीपं च पूर्वशः ५२
यागदेवान्विसृज्यन्ते मूर्तिकुम्भे षडध्वनि
तत्स्थाने वेदिकाकुम्भे सर्वघोषैरलंकृतम् ५३
प्रासादं तु प्रदक्षिण्यां सर्वघोषैरलंकृतम्
तत्तत्स्थानेषु कुंभं च पञ्चमूर्तिषु सेचयेत् ५४
प्रधानकुम्भमुद्धृत्य हृदये हृदयं न्यसेत्
शुद्धवस्त्रेण उन्मृज्य रक्तचन्दननिर्मितैः ५५
वस्त्राभरणमाल्येन अर्चयेद्वीरसंहिताम्
असितांगानि लोकेशान् अर्चयेद्धूपदीपकैः ५६
महाहविर्निवेद्यं च मुखवाससमन्वितम्
ताम्बूलं दर्पणादीनि उपचाराणि सर्वशः ५७
रक्तान्नं माषसंयुक्तं दधिचुण्डसमन्वितम्
भैरवाण्यसितांगानि लोकपालादिभिस्सह ५८
बहिर्बलिं स्वनाम्नेन क्षिपेच्छैवस्य ब्रह्मकम्
ब्राह्मणान्भोजयेद्दद्याद् गोभूहिरण्यदानकैः ५९
आचार्ये मंत्रसंयुक्तं तद्रूपं स्वर्णबिन्दुवत्
वस्त्रहेमांगुळीयुक्तं दापयेत्तु जनार्दने ६०
समीपे सहमाप्नोति पुनश्शत्रु विनश्यति
राजराष्ट्रं तु सन्तुष्टिः संतुष्टिस्साधकप्रभो ६१
स्थापनं वीरभद्रेशं वीरभद्रोत्सवं शृणु

इति पूर्वसहस्रे तन्त्रे क्रियापादे वीरभद्रस्थापनविधिः षट्त्रिंशत्पटलः ३६

चक्रस्थापनविधिः ४०

चक्रस्थापनं वक्ष्ये सर्वारिष्टफलप्रदम्
चक्रं तु बहुभेदेन दशनिष्कसमन्वितम् १
सौवर्णं राजतं ताम्रं मयलोहे तु कांस्यकैः
पंचलोहमिति प्रोक्तं स्वर्णरौप्यविवर्धितम् २
मधूच्छिष्टक्रमैर्युक्तं मेरुचक्रं सुभूम्यकम्
उत्तममंगुलं तारं मध्यमं भूतमंगुलैः ३
अधमं चतुरंगुल्यं चक्रं दैर्घ्यकमुच्यते
पंचविंशति गोष्ठेषु मध्ये मायाक्षरान्वितम् ४
नमश्शिवाय पदं तत्र यनवाशिमयस्यपि
मवायनशिवीथिः स्याद् यवाशिमन इत्यपि ५
शिवाय नम उद्धृत्य पंचविंशति कोष्ठकैः
प्रणवाक्षरमध्ये तु पंचविंशाक्षरं लिखेत् ६
पंचविंशति कोष्ठेषु तद्बाह्ये भ्रमयादिषु
वेष्टयेच्चक्रदेवं तु नृत्तमूर्तिं विशेषतः ७
उमाचक्रविधिं वक्ष्ये पंचनिष्कं नवं तथा
तपनिष्कं प्रकर्तव्यं मेदिनीं मेरुभिस्तथा ८
गणाश्रयं पंचकोणे तु पद्माष्टदळसंयुतम्
पद्मं षोडशपत्रं च अष्टपत्रं पुनः प्रिये ९
चतुर्दळसमायुक्तं +++++++
रेखात्रयसमायुक्तं चतुर्द्वारसमन्वितम् १०
रक्षाचक्रं द्विधा चैव शिवशक्तिसमन्वितम्
सौम्यस्थाने उदीची स्याद् प्रतिष्ठामण्टपेत्यपि ११
चतुरश्रसमायुक्तं चतुर्द्वारसमन्वितम्
द्वारधामविधिः प्रोक्तं पंचरत्नानि एव च १२
वेदिकायां न्यसेन्मध्ये स्फुरत्ताराधिपप्रभम्
वसुवल्कळमृत्तिः स्याद् प्रकासप्तोदकादिभिः १४
यागद्रव्यादिसर्वेषां स्थापयेद्दिव्यदृष्टिके
देशिकं स्थापयेच्छुद्धं शुद्धशैवपरायणैः १५

नेत्रयुग्मयुते ऋक्षे अंकुरार्पणमाचरेत्
स्थपतिस्थापकायां तु नेत्रोन्मीलनमाचरेत्  १६
पुण्याह प्रोक्षणं कृत्वा पद्माष्टदळसंयुतम्
शूलकुंभं प्रतिष्ठाप्य चन्द्रसूर्याग्निमेव च  १७
गन्धपुष्पं तु नैवेद्यं शालाखान्नूडिकं तथा
मध्ये मायाक्षरं न्यस्याक्षराग्रे परिन्यसेत्  १८
गौरीचक्रमिति प्रोक्तं कुम्भमण्डलदेशिकाम्
सुवर्णपात्रे मधुञ्चैव घृतक्षीरं प्रपूरितम्  १९
त्र्यश्रं मध्यमे बिन्दुं कोणाग्रे परिविन्यसेत्
वस्तु यत्र न्यसेच्चक्रे पंचगव्याभिषेचनम्  २०
कुम्भत्रयं विशेषेण अभिषेकं च मूर्धनि
नदीतीरे तटाके वा विन्यसेज्जळमध्यमे  २१
चतुर्वेदसमायुक्तं शंखमंगळसेवितम्
उद्धृत्य यागशालायां पिण्डिकायान्तु विन्यसेत्  २२
यागवास्तु हुतं पूर्वं पर्यग्निकरणं तथा
संस्कारसमायुक्तं पादप्रक्षाळनं विधिः  २३
वेदिकोर्ध्वे तु विन्यस्य शालितण्डुलसंयुतम्
पद्माष्टदळमेवोक्तं विचित्रं केसरान्वितम्  २४
शिवकुम्भं प्रतिष्ठाप्य कर्करी नवकं तथा
सप्तविंशत्सुगन्धाद्यैः स्थापयेज्जलसंयुतम्  २५
पंचकम्बळहस्तौ तु त्रिताळं वा तदूर्ध्वके
वर्धनीं कुम्भतत्पूर्वे विन्यसेद्वेदिका सह  २६
तदूर्ध्वे विन्यसेच्चक्रं पुण्याहप्रोक्षणं तथा
करन्या सन्ततः कृत्वा भूतशुध्यन्तरीयताम्  २७
इन्द्रादीशानपर्यन्तं अनन्तादिशिखण्ड्यकैः
गणपतिं भारतिञ्चैव लक्ष्मीं सौरादिकुम्भकैः  २८
ब्रह्मविष्णुहरांश्चैव दक्षिणे पूजयेद्बुधः
दुर्गायां वटुकञ्चैव नैर्ऋते पूजयेत्तथा  २९
अम्बी चैव गणाम्बी च गंगा गौरी तु पाशधृक्

वायो काळी समायुक्तं सोमे तत्वत्रयात्मकम् ३०
क्षेत्रपालगुरुं चैव ऐशान्ये तु समर्चयेत्
सप्तविंशत् घटोर्ध्वे तु विन्यसेद्देशिकोत्तमैः ३१
वेदिकोर्ध्वे तु विन्यस्य नृत्तमूर्तिर्विशेषतः
वर्धनीं तु मनोन्मन्यां वामादिनवशक्तयः ३२
गन्धपुष्पाक्षतैः पूज्य नैवेद्यं धूपदीपकैः
होमयेत्पंचकुण्डे तु पंचब्रह्म सहस्रधा ३३
प्रत्येकं संहिता मंत्रैः होमयेत्तु दिशां प्रति
मंत्रन्यासविधिं सर्वं चक्रमध्ये तु विन्यसेत् ३४
तत्वं षट्त्रिंशत्तत्वे तु अष्टत्रिंशत्कलान्यसेत्
तत्वत्रयं न्यसेन्मध्ये आत्मविद्याशिवान्तकम् ३५
पंचाक्षरेण मंत्रेण मूलमंत्रेषु विन्यसेत्
++पंचाक्षराणां तु मूर्ति चक्र मूर्धनि ३६
पुनदष्टोत्तरं हुत्वा पूर्णान्तं कुम्भवन्यसेत्
रात्रौ निद्रां त्यजेद्धीमान् प्रत्युषे स्नानमाचरेत् ३७
स्नानतर्पणकं पूर्वं पूजयेद्यागमन्दिरम्
प्रत्येकं च शतं हुत्वा चक्रमुद्धृत्यमेव च ३८
उदकादीनि सर्वेषां स्नापयेच्चक्रमध्यमे
पुनरष्टोत्तरं हुत्वा पूर्णान्तं कुंभवन्यसेत्
रात्रौ निद्रां त्यजेद्धीमान् प्रत्यूषे स्नानमाचरेत्
स्नानतर्पणकं पूर्वं पूजयेद्यागमन्दिरम्
प्रत्येकञ्च शतं हुत्वा चक्रमुद्धृत्यमेव च
उदकादिभिस्सर्वैश्च स्नापयेच्चक्रमध्यमे
पुनरष्टोत्तरं हुत्वा पूर्णान्तं होमयेच्छनैः ३९
पूर्णान्तं संहितामंत्रैः प्रत्येकं जुहुयादिनाम्
पूर्तिकुंभे तु संयोज्य तत्र कुंभाभिषेचनम् ४०
वर्धनीं तु मनोन्मन्यां रत्नकुम्भाभिषेचनैः
पूर्ववत्कुंभचक्रं तु चक्रस्यैव दळे न्यसेत् ४१
महाहविर्निवेद्यं च ताम्बूलं चोपचारकैः

चक्रमध्ये सदा ध्यात्वा मूलाधाराग्निमध्यमे ४२
त्रिणेत्रं रक्तवर्णं च शूलं पाशं जटाधरम्
सोमाभयसमोपेतं किंकिणीनूपुरान्वितम् ४३
दक्षपादं ततोद्धृत्य वामपादं तु सुस्थितम्
शुक्लयज्ञोपवीतं च बाडवाननमेव च ४४
चक्रमध्ये सदा ध्यात्वा श्यामळां चन्द्रसंनिभाम्
विपदन्नादसंयुक्तां मदघूर्णितलोचनाम् ४५
नित्यमभ्यर्च्य चक्रे तु पुत्रपौत्रविवर्धनम्
स्त्रीवश्यं राजवश्यं च पुरुषवश्यं तथैव च ४६
अणिमासिद्धितत्कुर्यात् सुभिक्षं विष्टपं तथा
नित्यं नित्यार्चनं कुर्यात् भोगमोक्षफलप्रदम् ४७
आयुर्वृद्धिकरं तत्र शिवसायुज्यमाप्नुयात्
दशनिष्कं पंचनिष्कं वा देशिकस्य समर्पितम् ४८
परिचारादि सर्वेषां दापयेत्तु यथोचितम्
शिष्यस्य मूलदेशे तु स्थापयेत्परमेश्वरम् ४९
लिंगस्थापनकाले तु दीक्षाकर्मोपदेशयुक्
इति पूर्वसहस्रे क्रियापादे प्रतिष्ठातंत्रे चक्रस्थापनविधिः
सप्तत्रिंशत्पटलः ४०

शक्तिस्थापनविधिः ४१

अथातस्संप्रवक्ष्यामि शक्तिस्थापनमुत्तमम्
उत्तरे वा विशेषेण सुमुहूर्ते सुलग्नके १
शक्तिनामक्रमं चैव प्रतिमाणां च षोडशैः
उमानृत्तेश्वरीं चैव श्यामवर्णां द्विलोचनाम् २
चतुर्भुजं प्रसन्नात्मा पीतवर्णाब्जधारिणीम्
हरिणीटंकसंयुक्तं ऊरुहस्तां स्मिताननाम् ३
सोमास्कन्देश्वरौ देवां अम्बिका सहकारणम्
उत्पलमूरुहस्तां च रक्तवर्णां त्रिलोचनाम् ४
शिवासनाद्विभुजां चैव नीलोत्पलवरान्विताम्

श्यामवर्णं त्रिणेत्रां च गणाबं च तथैव च ५
इन्दुशेखरपार्श्वे तु अम्बिका शक्तिभिस्सह
श्वेतवर्णं द्विनेत्रां च महानीलोत्पलान्वितम् ६
ऊरुहस्तस्थितान्देवीं शान्तिबिन्दुद्विलोचनाम्
त्रिपुरादिर्भीषणोद्देवं गंगाशक्तिसमन्वितम् ७
रक्तवर्णं द्विनेत्रां च पद्मस्थां पाशभृत्करैः
ऊरुहस्तस्थितान्देवीं सर्वाभरणभूषिताम् ८
आरूढादीनि सर्वेषां गौरीं शक्तिसमन्विताम्
द्विनेत्रां द्विभुजां चैव समुन्नतपयोधराम् ९
अक्षमालाब्जधारीञ्च गौरवर्णां सुयौवनाम्
अम्बी चैव गणाम्बी च गंगा गौर्युमा तथा १०
सद्यादीशानपर्यन्तं शक्तयः परिकीर्तिताः
दृषणे लोहयुक्ते च पटे वा भित्तिचित्रके ११
अंकुरं पूजयेत्तत्र पुण्याह प्रोक्षणं तथा
ऐशान्ये पश्चिमे वापि कल्पयेत्तु शिवाग्रके
पंचविंशति हस्तैश्च कल्पयेन्मध्यवेदिका
पंचाग्निं कल्पयेत्पूर्वं कुण्डमण्डपवेदिका १२
दर्पणोदरसंकाशं कल्पयेद्यागमन्दिरम्
बिन्दुत्रिकोणषट्कोणं भूताश्रं योनिरेव च १३
एकाग्निं योनिकुण्डे तु चतुर्द्वारसमन्वितम्
दर्भमालैर्विताने तु मुक्तादामविभूषितम् १४
आरूढादीनि सर्वेषां गौरीशक्तिसमन्विताम्
द्विनेत्रां द्विभुजां चैव समुन्नतपयोधराम् १५
नदीतीरे तटाके वा तत्र मध्ये प्रपाद्विधिम्
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत् १६
प्रासादप्रदक्षिणं कृत्वा प्रपामध्ये प्रतिष्ठितम्
निर्वाणदीपमास्थाप्य सप्तरात्रि विशेषतः १७
यामान्तं विन्यसेद्देवीं पूर्ववद्भ्रमणेष्वपि
यागवास्तुहुतं पूर्वं पर्यग्निकरणं तथा १८

शालिभिः स्थरिडलं कृत्वा अ्रष्टद्रोणैश्च शालिभिः
विचित्रकेसरैर्युक्तं केसरं मूर्तिसंयुतम्  १९
मध्यमे लक्षणैर्युक्तं षट्त्रिंशत्प्रस्थपूरितम्
पूर्वादीशानपर्यन्तं विन्यसेद्रत्ननासिकाम्  २०
मध्यमे पूर्ववद्देवीं पंचशक्तिर्यथा तथा
वामादिनवभेदं च अर्चयेद्देशिकोत्तमः  २१
पूर्वादीशानपर्यन्तं कलाकर्करि विन्यसेत्
वामाज्येष्ठा च रौद्री च शान्तिः श्रद्धा च पंचमी  २२
वागीश्वरी क्रियाशक्तिः लक्ष्मी सृष्टिस्तथैव च
मोहिनी प्रथमाचासी दासीविद्या च मालिनी  २३
सुरानन्दा नगा बुद्धिः तेषां षोडशशक्तयः
पीतं रक्तं तथा कृष्णं नीलं श्वेतं विचित्रकम्  २४
स्वर्णं रक्तं सितं कृष्णं अनेकाकारशक्तिषु
दर्पणं तालवृन्तं च चित्रमारुतमेव च  २५
सुगन्धपुष्पदामैश्च पादुकर्मासनं तथा
शषकं गणिकाधूपदीपताम्बूलमेव च  २६
खड्गखेटकहस्ताश्च रक्तास्सर्वांगभूषिताः
पूर्वादीशानपर्यन्तं अर्चयेत्षोडशेश्वरीम्  २७
मूर्तोपिपंचमूर्तिं च विन्यसेन्मध्यदुन्मनीम्
पूर्वे वा पश्चिमे वापि कल्पयेच्छयनवेदिकाम्  २८
कम्बळं विन्यसेदूर्ध्वं बेरे तु स्नपनान्वितम्
उदकादीनि सर्वेषां स्नापयेद्देविकोष्ठकैः  २९
प्राक्छिरं विन्यसेद्देवीं निद्राकुम्भसमन्वितम्
पंचाग्निं होमयेत्पूर्वं मंत्रन्यासं समर्चयेत्  ३०
षट्त्रिंशत्तत्वतत्वे तु त्रिखराडाध्वा षडध्वहि
विन्यसेत्पूर्वतत्वे तु अष्टत्रिंशत्कला न्यसेत्  ३१
मातृकां गौरिकर्णे तु विन्यसेत्परमेश्वरी
त्रिखन्डाध्वा पुनश्शक्ति कलामायावसानकम्  ३२
रक्षाबन्धनमेवोक्तं रात्रौ जागरणं तथा

प्रभाते विधिवत्स्नात्वा शुद्धशैवपरायणैः ३३
पंचांगभूषणोपेतं सोष्णीषणचोत्तरीयकम्
पूर्ववन्न्यासकर्माणि पूजयेद्यागमण्डपम् ३४
होमयेन्मूलमन्त्रेण रत्नन्यासं दृढी कृतम्
प्रणवं चादितः कृत्वा बिन्दुनादसमन्वितम् ३५
श्रीमाया त्रिपुरारिस्स्यात्त्रिविधं बीजसंपुटम्
माया द्वौ द्वादशं वर्णं शम्बरारिपुनस्तथा ३६
महागौरी नमोन्तं च प्रतिष्ठाद्युत्सवो मनुः
मूलमंत्रं समुच्चार्य होमयेन्मूलविद्यया ३७
सहस्त्रं होमयेत्कृत्वा रक्षायाः कारकर्मणि
त्रिखण्डाध्वा पुनः पूर्वं विन्यसेद्देशिको मनुः ३८
श्रीकण्ठं च कलान्यासं गौरीन्यासं पुनस्तथा
षट्त्रिंशत्तत्वतत्वेशीं विन्यसेत्स शिवद्विजः ३९
लेपनं मर्दयेद्धस्तौ लेखितं प्रणवो मनुः
सुगन्धपुष्पसाधारं मंत्रमूर्तिं सदाशिवम् ४०
शक्तिहीनश्शिवो नास्ति शिवहीनस्सशक्तियुक्
कोटिचन्द्रप्रतीकाशं जपाकुसुमसंनिभम् ४१
श्यामळां द्विभुजां बालां कटीसूत्रप्रलम्बिताम्
नीलोत्पलमूरुहस्तं च अधरावल्लकीधरम् ४२
भावयेत्सुषुम्नया दीपं हृदये दीपवत्प्रभुम्
आवाह्य देवीन्तत्रैव क्रिया ब्रह्मप्रतिष्ठितम्
नैवेद्यं धूपदीपं च पुनरष्टोत्तरं हुनेत्
मूर्तिकुंभं प्रतिष्ठाप्य वह्निस्थं कुम्भस्वस्तिकम् ४३
कुम्भस्थं यानयेत्सालां पुण्याह प्रोक्षणं सुधीः
मूर्तिकुंभं समुद्धृत्य मेरोर्ध्वे तु विन्यसेत् ४४
महानादादिवेदं च शंखमद्दळदुन्दुभिः
वस्त्रैराभरणैर्माल्यैः अलंकृत्य महेश्वरम् ४५
महाहविर्निवेद्यं च मुखवासनशोधनम्
तत्तद्देवं सहोपेतं प्राकारे तु प्रदक्षिणम् ४६

शान्तिहोमं गतं हुत्वा आचार्यं प्रियमानसः
दक्षिणां दापयेत्पश्चात् सर्वघोषसमन्वितम्  ४७
आरोग्यादीपमीशादि नमस्कृत्य क्षमस्वतः
इति पूर्वसहस्रे क्रियापादे प्रतिष्ठातन्त्रे
शक्तिस्थापनविधिरष्टत्रिंशत्पटलः  ४१

## बाणलिङ्गस्थापनविधिः  ४२

अथातस्संप्रवक्ष्यामि बाणलिंगप्रतिष्ठितम्
आत्मार्थं लिंगवत्प्रोक्तं सर्वमासे प्रतिष्ठितम्  १
जम्बूपक्वफलं स्निग्धं मधूभृंगप्रभान्वितम्
काचवन्नीलबिम्बं तु गोस्तनं कुक्कुटाण्डवत्  २
लिंगाधिक्यं तु संन्यासो शक्त्याधिक्यं तपस्विनाम्
लिंगपीठसमं शैवं स शिवब्राह्मणो बुधः  ३
संगृहेद्दृष्टसा लिंगे स्थापयेद्विष्ठरश्रवः
पंचभूतात्मलिंगेषु जीवलिंगे समाश्रितम्  ४
शिवलिंगं प्रतिष्ठाप्य देशिकन्तु शिवद्विजैः
पूर्वे वा पश्चिमे वाप्युत्तरे वा विशेषतः  ५
यागशालां प्रकल्प्यं च नवहस्तमथापि वा
चतुस्तम्भसमायुक्तं चतुस्तोरणभूषितम्  ६
मध्ये वेदिपदं कृत्वा पंचाग्निर्वा नवाग्निषु
दर्पणोदरसंकाशं तदूर्ध्वे ब्रूहि मण्डलम्  ७
पद्माकारं दळोपेतं वसुपत्रं सकर्णिकम्
मूर्तिकुंभं प्रतिष्ठाप्य ऐशान्ये नासिका घटे  ८
मूर्तिकुंभं परिभ्राम्य चूताश्वत्थदळान्वितम्
सरत्नं सापिधानं तु नाळिकेरस्तथैव च  ९
पूर्वादीशानपर्यन्तं भ्रामयेत्सप्तविंशतिम्
मंगळाष्टायुधाष्टं च स्थापयेद्यागमन्दिरे  १०
यागवास्तुहुतं पूर्वं पर्यग्निकरणं तथा
अंकुरं पूर्ववत्कृत्वा जलमध्ये प्रभान्वितम्  ११

स्थापयेत्सप्तनाडीं च विन्यसेच्छिवलिंगकैः
यागार्चनविधिर्युक्तं मूर्तिकुम्भैस्सदाशिवम्  १२
वर्धनीं तु मनोन्मन्यां अनन्तादिशिखण्ड्यकैः
न्यासकर्माणि विन्यस्य शान्तिनन्द्यादिरर्चितम्  १३
धूपदीपं परिभ्राम्य शयनं पंचकम्बळम्
विन्यसेद्वस्तुलिंगं तु स्नापयेत्तत्वरन्ध्वकैः  १४
तत्वतत्वेश्वरं चैव मूर्तिमूर्तीश्वरान्वितम्
होतारं पंचधाश्चैव देशिकानां विशेषतः  १५
स शिवब्राह्मणैर्युक्तं प्रतिष्ठाद्युत्सवान्तकैः
ईशानमीशदिग्भागे प्राधान्यं वृत्तमेव तु  १६
पुरुषं पूर्वकुण्डेषु दक्षिणे हृदयाननम्
उत्तरे वामदेवं तु सद्योजातं तु पश्चिमे  १७
ईशाने तु शिरः प्रोक्तं हृदये घोरवक्त्रकैः
शिखावामेश्वरं चैव सद्योद्भवं तु कंचुकैः  १८
पुरुषन्नेत्रमेवोक्तं भैरवं मंत्रमीश्वरम्
पंचब्रह्मषडंगानि विन्यसेत्पिण्डकां शिलाम्  १९
ईशानं सर्वदेवं तु लिंगोर्ध्वे वा विशेषतः
श्रीकण्ठकेशवादीनां मातृकान्यासमेव च  २०
मंत्रन्यासं तथान्यासतत्वन्यासं च मूलधृक्
लिंगमूर्ध्नि न्यसेत्सर्वं अग्निकार्योक्तमाचरेत्  २१
तिलमीशानपूर्वे तु सर्षपं पुरुषेण तु
मुद्गदक्षिणवक्त्रेण माषचिम्बाढगुह्यके  २२
चरुं चैव घृतं प्रोक्तं सद्योजातैर्विशेषतः
प्रत्येकं पंचवक्त्रेण साहस्रेण पृथक्पृथक्  २३
पूर्णान्तं च षडध्वं हि त्रिखण्डाध्वा विशेषतः
त्रिखण्डं विन्यसेद्देवं जानुकण्ठशिरोवधिः  २४
गोमुखे चात्मतत्वं च कण्ठे विद्यान्ततत्वकम्
दक्षिणे तु शिवश्चैव पिण्डिका खण्डके न्यसेत्  २५
पिण्डिकान्यासमेवोक्तं लिंगन्यासक्रमं विदुः

आसनं आत्मलिंगेषु लिंगाग्रे मूलविद्यया २६
तदग्रे ध्यानमध्ये तु मंत्रमूर्तिं सदाशिवम्
शिवतत्वं न्यसेत्सर्वं शक्तितत्वं शिवं मनुः २७
सदाशिवासनं लिंगं लिंगासनं तु पीठिका
पीठिकासनभूमध्ये देशिकध्यानमासनम् २८
मूलमंत्रेण जप्यन्ते स्नापयेत्पंचगव्यकैः
पंचब्रह्मषडंगैश्च विन्यसेल्लिंगमूर्धनि २९
प्रतिसरं बन्धयेत्कृत्वा रात्रौ निद्रां विवर्जयेत्
प्रभाते विधिवत्स्नात्वा शुद्धशैवं शिवद्विजः ३०
स्नात्वादिकर्मवत्प्रोक्तं नित्यनैमित्तिकेषु च
यागशालां समाश्रित्य पादप्रक्षाळनं तथा ३१
आचम्य भस्मवत्प्रोक्तः त्रिपुण्ड्रस्याष्टसंधिषु
पुण्याह प्रोक्षणं कृत्वा ज्वलितं पंचवक्त्रवत् ३२
शान्तिनन्द्यादिदेवानां पूर्ववत्पूजयेद्विभुः
मूर्तिकुम्भसमोपेतं पूर्वमासनविन्यसेत् ३३
वर्धनीं वसुकुम्भे तु अनन्तादिशिखण्डयकम्
गन्धपुष्पश्च संपूज्य उपचाराणी सर्वशः ३४
नैवेद्यं धूपदीपं च होमयेत्तु सहस्रकम्
प्रत्येकं होमयेत्कुण्डैः पूर्णान्तं सहितेन वै ३५
तत्र लिंगं समुद्धृत्य स्नापयेदर्घ्यवारिणा
आसनं मूर्तिमूलं च अष्टत्रिंशत्कलान्यसेत् ३६
विद्यादेहं तु विन्यस्य होमयेन्मूलमंत्रकम्
मूलेनैव शतं हुत्वा पूर्णान्तं तु त्रिखण्डवत् ३७
पूर्णाहुतिमनुश्चैव मूलमंत्रैश्शिवाक्षरैः
गोशृंगांग्रप्रमाणेन यवप्रमाणकन्यथा ३८
बिन्दुनामध्यमं प्रोक्तं प्रमाणे तु घृतस्यापि
वह्निस्थमूर्तिकुम्भे तु कुम्भस्थं स्वस्तिवाचकैः ३९
प्रासादप्रदक्षिणं कृत्वा स्थापयेदालयं प्रति
आत्मार्थे भ्रामयेद्यागैर्मूर्तिकुंभं प्रदक्षिणैः ४०

संनिधौ मराडलं कल्प्य शालीमष्टदळोन्वितम्
तदूर्ध्वे विन्यसेत्कुंभं पुरयाह प्रोक्षणं तथा ४१
धूपदीपादिपुष्पाद्यैः पूर्ववदर्चनं तथा
वेदिकोर्ध्वे चतुस्तंभे चित्राकारमलंकृतैः ४२
आसनं तत्र विन्यस्य चतुर्दीपैः प्रभान्वितम्
तत्र शंखं प्रतिष्ठाप्य पूर्णोदकसमन्वितम् ४३
पाद्यमाचमनं चार्घ्यं विन्यसेद्देशिकोत्तमैः
बिल्वपत्रैश्च कह्लारैः पद्मपीठे तु वृत्तके ४४
सुगन्धगन्धाक्षरैर्युक्तं वामभागे प्रतिष्ठितम्
न्यासकर्माणि सर्वाणि तत्र देहं न्यसेच्छिवम् ४५
आत्मार्थं पूजयेत्कृत्वा नकुर्यात्तु परार्थकम्
भूतशुद्ध्यन्तरीयञ्च हृदये दीपवत्प्रभुः ४६
आसनं शुद्धविद्यान्तं मूर्तिशक्त्यन्तगोचरम्
आवाह्यस्य शिरो मूर्तिं मूर्तिस्स्यादुपरिस्थितः ४७
आधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम्
शान्त्यादिमराडलं कृत्वा च्छदने द्वयविन्यसेत् ४८
आसनं मूर्तिविन्यस्य अष्टत्रिंशत्कलान्यसेत्
विद्या देहं समावाह्य विन्यसेज्ज्ञालमराडले ४९
शिवहस्तं च संकल्प्य गन्धमर्दनशंकरम्
आदिबिन्दुश्च हृन्मध्ये लेखितं हस्तमेव हि ५०
आसनं मूर्तिदेहं तु मूलमन्त्रेण चार्चितम्
आवाहिन्या हृदावाह्य क्रिया ब्रह्मप्रयोगवित् ५१
बालसूर्यप्रभं देवं सहस्रकिरणोज्वलम्
कोटिचन्द्रनिभाभासं स्फुरत्ताराधिपप्रभम् ५२
प्रासादेन तु मंत्रेण लिंगं चैतन्यमूर्धनि
पाद्यमाचमनं चार्घ्यं हृदयेन निवेदयेत् ५३
नैवेद्यं धूपदीपं च पुनर्जीवं न्यसेच्छिवम्
मूर्तौ जीवन् न्यसेच्चन्द्रनाडीपथाविनिर्गतम् ५४
लिंगमूर्ध्निन्यसेत्कुंभं पिराडकाग्रे तु वर्धनीम्

अनन्तादिशिखराड्यन्तं पिरिडकाग्रे दळे न्यसेत् ५५
वस्त्रेरौव तु संमृज्य रक्तवस्त्रेरा वेष्टयेत्
इराडादिभिस्सुगन्धैश्च भूषरौर्गुग्गुळुं दहेत् ५६
महाहविर्निवेद्यं च ताम्बूलं मुखवासकैः
धूपदीपादिभिर्देवं गन्धपुष्पाक्षतान्वितम् ५७
उपचारारिा सर्वेषां नीराजनैर्विशेषतः
आचार्यं दक्षिरां दद्यात् वस्त्रहेमांगुळीयकैः ५८
पंचनिष्कं त्रिनिष्कं वा दशनिष्कमथापि वा
परिचारारिा सर्वेषां दक्षिरौर्वा यथोचिताम् ५९
आचार्यमनसा प्रीतिः शिवसायुज्यमाप्नुयात्

इति पूर्वसहस्रे क्रियापादे प्रतिष्ठातन्त्रे
बारालिंगस्थापनविधिरेकोनचत्वारिंशत्पटलः ४२

## शिखिनृत्तदेवस्थापनविधिः ४३

श्वेताकारं श्वेतभूषराधरं विन्यस्त ++धरं
टंकं कृष्रामृगं धरं करयुगे शार्दूलचर्माम्बरम् ।
अर्धोन्मीलनलोचनत्रययुतं मौलौ जटाबंधनं
वन्दे सन्ततवीरभद्रचरराांभोरुहं पाहि माम्
अथातस्संप्रवक्ष्यामि स्थापनं वक्ष्यते हरिः
शिखिरूढस्तथादेवं तारडवं शिखिनृत्तकैः १
उत्तरायराकाले तु सुमुहूर्ते सुलग्नके
श्वेतवर्णं चतुर्बाहुं ऊर्ध्वकेशं त्रिरोत्रकम् २
त्रिशूलडमरुकैर्युग्मं कपालं खड्गधृक्करैः
दंष्ट्राकराळवदनैः पद्मासनसमन्वितम् ३
पीताम्बरधरं देवं सर्वाभररााभूषितम्
एवं ध्यात्वाशळैर्वृक्षैः अखराडं खराडतुराडकम् ४
शिखिवाहनतद्रूपं नृत्तकेश्वरतादृशम्
वामदेवोत्सवं साक्षाद् आदिरूपं सदाशिवम् ५
द्वात्रिंशल्लक्षरौर्युक्तं निर्मितं शिल्पिकौस्तुभैः

ब्रह्मा चतुर्मुखः पीतश्चतुर्दोर्दण्डमण्डितः ६
शंखचक्रगदा चैव ऊरुहस्तं चतुर्भुजम्
दक्षभागे प्रतिष्ठाप्यमादिरूपं महेश्वरम् ७
विष्णुश्चतुर्भुजो मौली मृगीटंकवराभयम्
जटामकुटसंयुक्तं वामभागे प्रतिष्ठितम् ८
श्वेतपद्मासनारूढं सदाशिवश्शक्तिधारिणीम्
रक्तपद्मासनासीनं सहस्रदळसंयुतम् ९
देवनृत्तकमायूरे मध्यभागे प्रतिष्ठितम्
रुद्राणी सहितः श्रीमान् सर्वदेवनमस्कृतैः १०
ग्रामे वा तु तटाके वा पत्तने राजधानिके
प्रतिष्ठाप्य सुलग्ने तु सुमुहूर्ते सुवासकैः ११
नागरं द्राविडं चैव प्रासादं तु विशालकम्
पंचप्राकारसंयुक्तं कल्पयेच्छिल्पिवित्तमैः १२
सुमुहूर्ते सुलग्ने तु अंकुरार्पणमाचरेत्
नयनोन्मीलनं कृत्वा हृन्मंत्रेण विचक्षणैः १३
गोभूहिरण्यकन्या च दर्शनं तत्त्रिमूर्तिषु
जलाधिवासनं कृत्वा नदीकूपे तटान्वितम् १४
अथवा तुण्डलिंगेन दर्पणोदरमध्यगम्
शीतकुंभाकृतिं पंच सप्तनाडीजलान्वितम् १५
ऐशान्ये पावके सौम्ये स्थापनं यागमण्टपम्
नवाग्निं वाथ पंचाग्निं मध्ये वेदीं प्रकल्पयेत् १६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
द्वात्रिंशद्धस्तविस्तीर्णं कल्पितं यागमण्टपम् १७
कुण्डवेदिषु तन्मध्ये शयनवेदीं तु शालिभिः
दळाष्टकसमायुक्तं वेदिका व्रीहितण्डुलैः १८
तिललाजसदर्भैश्च दळाष्टकसमन्वितम्
पूर्वादीशानपर्यन्तं भ्रामयेच्छालितण्डुलैः १९
अंकुराण्यर्पयेत्पूर्वं यागवास्तुहुतं पुनः
पर्यग्निकरणं कृत्वा चतुर्दशसमन्वितम् २०

पाशुपतं समभ्यर्च्य भ्रामयेत्कर्करी सह
पूर्वादीशानपर्यन्तं स्थापयेत्कुंभमेव च २१
चतुर्विंशत्प्रतिष्ठाप्य त्रिभागे विन्यसेद्बुधः
वेदिकोर्ध्वे त्रिधाकुम्भे सौम्यदक्षिणमध्यमे २२
त्रिविधं घटसंयुक्तं कर्करीसहसंयुतम्
चूतपल्लवदर्भाद्यैः वस्त्ररत्नसमन्वितम् २३
प्राग्भागे त्रिविधं कुंभं सूरमिन्द्रासितांगकैः
आग्नेय्यां कुम्भमाश्रित्य सुभूवह्नी सुदुर्गया २४
दक्षेदण्डधरं चण्डं शरजन्मासमन्वितम्
नैर्ऋते क्रोधवास्वाधिमर्चयेद्राक्षसा दिशि २५
वारुणे वारुणोन्मत्तैः भारतीं धूपदीपकैः
पायुदेशे कपालि च पटुकं लक्ष्मसंयुतम् २६
सोमसौम्य सुभीष्मं च चण्डकेन समन्वितम्
ईशानं गुरुपालं च गन्धपुष्पान्वितं सह २७
आचार्यधूपदीपाद्यैः च विशेषार्घ्यसमन्वितम्
न्यासकर्माणि सर्वाणि भूतशुध्यन्तरीयताम् २८
बिल्वपत्रं च पुष्पस्य गन्धाक्षतसमन्वितम्
त्रिकुम्भं ब्रह्मविष्णुश्च रुद्रमूर्तिं च मध्यमे २९
अभ्यर्च्य भावयेत्तत्वान्यात्मविद्या शिवान्तकम्
कर्करीगुणसंयुक्तं इच्छाज्ञानक्रियेष्वपि ३०
अभ्यर्च्य धूपदीपैश्च नैवेद्यैरुपचारकैः
शयनवेदिन्तदूर्ध्वे तु रोमशं वा घृतकम्बलैः ३१
शापयेत्प्राक्शिरोध्वेषु त्रिषु स्थाने त्रिमूर्तिषु
होमकर्म समारभ्यं वह्निकर्मणि पंचधा ३२
संहितेनाहुतिं जप्वा अयुतं सहपञ्चधा
तंत्रमंत्रं न्यसेदध्वे आहुनेच्छतसहस्रकैः ३३
प्रधानकुंभे तु संयोज्य मूर्तिकुंभं च योजयेत्
निश्शेषमाज्यमादाय संहितायाभिमंत्रयेत् ३४
मूलेन होमयेत्पश्चाद् संहितेन क्षिपेत्सुधीः

मन्त्रन्यासविधिं कृत्वा षट्त्रिंशत्तत्वसंयुतम्  ३५
श्रीकराठः केशवादिश्च मातृकामंत्रसंहितैः
षडध्वन्याससंविद्वान् तत्त्रिमूर्तिं च भावयेत्  ३६
किंच तत्वत्रयन्यासे जानुकराठशिरोवधि
प्रतिसरं बन्धयेत्कृत्वा पुरायाह प्रोक्षणं तथा  ३७
देवस्य दक्षिरो हस्ते त्र्यम्बके मन्त्रबन्धयेत्
धूपदीपं तथा दद्यात् रात्रौ निद्रां विवर्जयेत्  ३८
प्रभाते विधिवत्स्नात्वा तर्पयेत्त्रयतत्वकम्
प्रणवादि वह्नि ++  धूमायासमन्वितम्  ३९
स्वस्वनाम्नैश्चतुर्थ्यन्ते योजयेद्देशिकोत्तमे
यागदेवान्समभ्यर्च्य पूर्वोक्तविधिना सह  ४०
गर्भगृहमलंकृत्य पुरायाहप्रोक्षणं तथा
पद्मचित्रतयस्याप्य सहेमं पंचरत्नकैः  ४१
प्रायश्चित्तसहस्रं च आहुनेत्तु यथाविधि
शयनदेवं समुद्धृत्य सर्वघोषैरलंकृतम्  ४२
सुमुहूर्ते सुलग्ने च सेचयेच्चैव साधकैः
अष्टबन्धं दृढीकृत्य अष्टमृत्युकषोदकम्  ४३
स्नापयेत्समलंकृत्य ब्रह्मविष्णुं च वामके
तत्र मध्ये हरो देवं स्थापनं संहिता मनुः  ४४
पूर्ववन्न्यासयेद्देव पंचपक्षवसुस्तथा
श्रीकराठमातृकं पञ्च कलान्यासेन मूलधृक्  ४५
षडध्वन्यासमार्गेण जीवन्यासं समाचरेत्
सृष्टिमूर्तिं न्यसेत्सृष्टिं स्थितिमूर्तौ स्थितिं न्यसेत्  ४६
संहारं संहृदिन्यासे पशुपाशपतिस्तथा
तत्सर्वपतिरूपेण ज्ञेयवान्पण्डितो मनुः  ४७
शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम्
नित्यं संहारमेवोक्तं सृष्टिस्थितिलयावहम्  ४८
लिंगे सर्वं समुत्पन्नं लयं तत्रैव चोच्यते
प्रासादेन सुसंभाव्य पंचभूते कलेश्वरम्  ४९

मूर्धादिब्रह्मरन्ध्रान्तं भावयेत्स्वस्वरूपकैः
आवाह्य पंचमुद्रस्य स्थापनं च निरोधनम् ५०
अवकुण्ठेन नैवेद्यं मंत्रसंहितयान्वितम्
पूर्ववत्पूजयेद्यागे होमयेन्मंत्रसंहितैः ५१
अन्तर्बहि हुनेद्धाव्य मूलमन्त्रेण संयुतम्
पूर्णाहुतिं जयादींश्च चित्तादीन्पूर्णसंक्षिपेत्
वह्निदेवं नमस्कृत्य मूलकुम्भे नियोजयेत् ५२
अन्तर्बलिं क्षिपेत्तत्र यागदेवान्विसर्जयेत्
प्राधान्यमूर्तिकुम्भेषु प्रासादे तु प्रदक्षिणैः ५३
गर्भगृहं प्रतिष्ठाप्य पुण्याह प्रोक्षणं तथा
स्नपनं नवकुंभेषु गव्यपंचामृतैस्सह ५४
अभ्यर्च्य धूपदीपस्य हृन्मध्येन विचक्षणैः
तुण्डलिंगार्पणं कृत्वा दर्पणे खड्गबिम्बवत् ५५
महाहविर्निवेद्यं च दर्पान्नं घृतसंयुतम्
लाजापूपफलैर्द्रव्यैः नैवेद्यं तु त्रिमूर्तिषु ५६
मुखवासेन ताम्बूलं उपचाराणि सर्वशः
नृत्तगीतसमोपेतं नित्यपूजार्चनं सदा ५७
शुद्धशैवं प्रतिष्ठाप्य दापयेदखिलस्तथा
अन्यथा वर्जयेत्कृत्वा राजराष्ट्रं विनश्यति ५८
आचार्येण तु संतुष्टिः वस्त्रहेमांगुलीयकैः
उद्धवो मुद्रया युक्तं प्रातस्संध्यार्चनं त्रिधा ५९
स्थापनं वक्ष्यते प्रोक्तं उद्धवं वक्ष्यते हरिम्
इति सहस्रतंत्रे क्रियापादे
शिखिनृत्तदेवतास्थापनविधिश्चत्वारिंशत्पटलः ४३

द्वारपालस्थापनविधिः ४४

द्वारपालविधिं वक्ष्ये स्थापनं परमेश्वर
उत्तरायणकाले तु दक्षिणायनमेव वा १
स्थापनात्प्रतिपक्षं तु अपरे ह्युत्सवादिषु

सुमुहूर्ते सुनक्षत्रे देवस्याकृतिमेव च २
पटे वाश्मानिलोहे वा द्वारस्थाने प्रतिष्ठितम्
त्रिणेत्रं चतुर्भुजं चैव जटामकुटमण्डितम् ३
सर्पयज्ञोपवीतं च सुदंष्ट्रं च भयानकम्
कपालमक्षमालां च त्रिशूलं दण्डमव च ४
सिंहस्यैव शिरो देशे व्योमपादं तथैव च
पद्मस्योर्ध्वैकपादं च दक्षिणे तु प्रतिष्ठितम् ५
श्यामाकारं द्विनेत्रं च ऊरुहस्तां च शारिकाम्
दण्डिनी सहितं चैव वामभागमथोच्यते ६
चतुर्भुजं त्रिणेत्रं च शूलपाशं जटाधरम्
चक्रिणामूरुहस्तं च मुद्धृत्य दक्षिणं पदम् ७
वामपादं च सिंहोर्ध्वे शिरोमालाविभूषितम्
रौद्रदंष्ट्रसुवक्त्रं च महाकाळं तथैव च ८
श्वेतवर्णं द्विनेत्रं च चक्रहस्तं च ऊरुधृक्
मुण्डिनी वामभागे तु सर्वलक्षणसंयुतम् ९
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत्
मधुत्रयं न्यसेन्नेत्रे द्रव्यमुन्मीलनं न्यसेत् १०
जलमध्ये प्रतिष्ठाप्य पंच नाडीषु विन्यसेत्
ऐशान्ये मण्टपं कल्प्य चतुर्द्वारसमन्वितम् ११
शिवाग्निं कल्पयेद्विद्वान् हंसवेदिसमन्वितम्
पंचकम्बळवस्त्राद्यैः निद्राकुम्भसमन्वितम् १२
सापिधानं सवस्त्रं च कूर्चपल्लवसंयुतम्
आसनं मूर्तिमूलं च विद्यादेहं च विन्यसेत् १३
आसनं गन्धवज्ज्ञेयं पुरुषमूर्तिं तथैव च
शुद्धविद्यामहामूलं द्वारपालानि भावयेत् १४
धूपदीपं च नैवेद्यं दण्डिनी मुण्डिनी सह
पूर्वादीशानपर्यन्तं दशकुम्भं प्रतिष्ठितम् १५
इन्द्रादीशानपर्यन्तं ब्रह्मविष्णुस्य देव हि
धूपदीपं परिभ्राम्य होमकर्म समाचरेत् १६

देवस्य शयनं कल्प्य विन्यसेत्तु विचक्षणः
होमयेत्प्रथमे रूप्यं सहस्रं वा तदर्धकम्  १७
त्रिखण्डं कल्पयेद्विद्वान् पुनर्देवस्य कल्पयेत्
मन्त्रन्यासं तथा न्यासं तत्वन्यासं समूलकम्  १८
त्रिखण्डं विन्यसेज्जीवं रक्षाबन्धनमेव च
पुनः कुंडाम्भसा प्रोक्ष्य प्रत्येकस्य सहस्रकम्  १९
कुण्डनैवेद्यधूपं च दीपञ्चैव दिशः क्रमात्
पञ्चशान्ति जपं कृत्वा स्वस्तिसूक्तं जपेद्बुधः  २०
प्रासादप्रदक्षिणं कृत्वा द्वारस्थाने तु विन्यसेत्
शयनदेवं समुद्धृत्य द्वारस्थाने तु विन्यसेत्  २१
मूर्तिकुम्भं समुद्धृत्य हृदये हृदयं न्यसेत्
वस्त्रैराभरणैर्माल्यैर्नैवेद्यं तु महाहविः  २२
ताम्बूलं धूपदीपं च आरात्रिकसमन्वितम्
शुद्धशैवस्तु कर्तव्यं दक्षिणां संप्रदाय च  २३
सामीप्यपदमाप्नोति शिवसायुज्यमाप्नुयात्  २४

इति पूर्वसहस्रे प्रतिष्ठातन्त्रे क्रियापादे
द्वारपालस्थापनविधिरेकचत्वारिंशत्पटलः  ४४

## बेरयात्राविधिः  ४५

बेरयात्राविधिं वक्ष्ये सर्वप्राणिसुखावहम्
उत्सवं नवविधं प्रोक्तं पवित्रं च महोत्सवम्  १
वसन्तं मदनोपेतं कृत्तिकाप्रसमन्वितम्
पुष्यरात्रिसमायुक्तं नित्यं नवविधोत्सवम्  २
त्रिसंध्यं युग्मसंधिं च महोत्सवसमन्वितम्
पवित्रं शिवसंधिं स्याद्बेरयात्रा विशेषतः  ३
मदने संधियुग्मे तु भ्रामयेत्सोममीश्वरम्
वसन्ते चन्द्रसंधिं स्यात् आद्रशास्त्रे शिवस्य च  ४
पवित्रे मदनोपेतं यागोपकरणं स्वजे
ऐशान्ये पावके सौम्ये षट्त्रिंशत्षोडशेऽपि वा  ५

मूर्तिस्तम्भसमायुक्तं पंचाग्निं वा नवाग्निषु
मध्ये वेदीं प्रतिष्ठाप्य दर्पणोदरसंनिभम्  ६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
मंगळाष्टायुधाष्टं च सकूर्मासनमित्यपि  ७
स्रुक्स्रुवे शुद्धशैवस्तु अन्यशैवैर्न कारयेत्
अन्यशैवैर्न कर्तव्यं कर्तव्यं शुद्धशैवकैः  ८
शुद्धशैवैस्तु कर्तव्यं राजराष्ट्रं सुखावहम्
अन्यशैवकृतं प्रोक्तं राष्ट्रक्षोभां मति भ्रमम्  ९
राष्ट्रनाशं धनैर्युक्तं शळभं च समाश्रितम्
समिच्चूतदळोपेतं तिलदर्भाक्षतान्वितम्  १०
सुपुष्पं गन्धरोच्येषु संग्रहेन्मृद्घटैस्सह
मंत्रेण शुद्धयेद्द्राव्यं दिव्यदृष्टिसमन्वितम्  ११
अपिधानादिसर्वेषां अभिमंत्र्य तदूर्ध्वकैः
जलपात्राणि सर्वेषां अभिमंत्र्य मुखोरसः  १२
दिग्बन्धनावकुराठन्तु शूलमुद्रां प्रदर्शयेत्
शालिभिः स्थरिडलं कृत्वा स्थापयेद्यागमन्दिरम्  १३
दळाष्टकसमोपेतं मूर्तिकुम्भं प्रतिष्ठितम्
ऐशान्ये मध्यमं स्थाप्य शिवकुंभं च वर्धनीम्  १४
चूताश्वत्थदळोपेतं नाळिकेरफलान्वितम्
रक्तगन्धोदकैः पूर्यमभिधान्यादि पूर्ववत्  १५
पूर्वादीशानपर्यन्तं अन्यतादिशिखराड्यकम्
वारुणादिनिर्ऋृत्यन्तं मेकरुद्रं च नेत्रकम्  १६
मध्ये सदाशिवं कुंभं ऐशान्ये वा मनोन्मनीम्
मंगळाष्टसुजीवे तु श्रीवत्सं शंखमित्यपि  १७
शक्तिमंत्रेण जीवे तु करणैः काळिभिस्सह
द्वारावृतवरेराये तु वृषभादिगणेश्वरम्  १८
आयुधादीनि सर्वेषां पाशखड्गैस्सुजीव हि
ऐशान्ये नैर्ऋृतेरिन्द्रं लोकेशमनुभिस्सह  १९
वारुणादिनिर्ऋृत्यन्तं वारुणादिषु राक्षसे

विद्येशादीनि सर्वेषां वस्तुबिन्दुसमाश्रितम्  २०
पंचाग्नौ च नवाग्नौ च पंचब्रह्मषडंगभिः
आरम्भेत्यवग्नेषु नाशनैतच्छिवाधिपम्  २१
उत्सवादि प्रतिष्ठान्तं पंचवक्त्रकृतेऽपि वा
क्रियारम्भे क्रियादर्च्यो बलिभावसमन्वितम्  २२
तद्भेदं भ्रमणोपेतं यामद्वारे निरीक्षणम्
पाद्यमाचमनं चार्घ्यं दद्याद्दानादिभिस्सह  २३
ताम्बूलमिक्षुसारे तु नाळिकेरं द्विधामिति
धूपदीपं परिभ्राम्य आरात्रिकसमन्वितम्  २४
पुष्पलाजदळोपेतं करमध्ये प्रपूरितम्
तल्लाजतद्दळोपेतं सर्वप्राणिसुखावहम्  २५
तद्दळेन सहो हीनं धनधान्यविवर्जितम्
तदूर्ध्वरूपममृतोपेतं तत्र मध्ये मृतेश्वरम्  २६
यागान्देशिकस्यैव बेरं तत्र सदाशिवम्
मूलस्थं मनुराधारं होतृभिः पंचवक्त्रवत्  २७
होतृभिर्देशिकोपेतं षड्वक्त्रं तत्र मूलवत्
मूलवद्वस्तु चैतन्यं षट्त्रिंशच्छक्तिजालकम्  २८
देशिकं कर्तृसादाख्यं होतृभिः पंचकृत्यपि
मौनमन्त्रजपं कृत्वा घोषणैर्मनुरुच्यते  २९
एर्वाणतिविश्वे तु त्रियम्बकब्रह्ममग्निषु
ब्रह्माविष्णुमहेशानं शक्तिश्शिवसमन्वितम्  ३०
ओमिति ब्रह्ममंत्रेण देशिकं घोषणैस्सह
यागदेवगृहं प्रोक्तं भ्रामयेत्तु यथोचितम्  ३१
देशिकं सव्यभागे वा होतृभिश्शिवयागवत्
सेव्यभागे तु कर्तव्यं देशिकं शिष्यसंयुतम्  ३२
वामभागे द्विजा घोषं चतुर्वेदसमन्वितम्
पृष्ठभागे मतंगेषु नानावाद्यसमन्वितम्  ३३
नानाघोषसमोपेतं पृष्ठपार्श्वे तु चारकम्
गर्भिणी दिनयात्रेषु पादांगुष्ठे पदे पदे  ३४

गणिकादिभिस्सर्वेषां बिन्दुवक्त्रं सुवक्त्रकैः
पूर्वाह्ने शान्तिकं प्रोक्तं सायाह्नं सर्वसिद्धिषु ३५
मध्याह्ने मध्यरात्रौ च राजराष्ट्रं विनश्यति
पंचाहे कृष्णगन्धं स्यात् चन्द्रशेखरमीश्वरम् ३६
नवाहे वा विधातव्यं नृत्तपंकोत्सवेषु च
अधिवासे तु तद्गन्धं प्रासादे तु प्रदक्षिणम् ३७
संहारं देवसंसिच्य गृहे सप्त तिरो भवेत्
अर्धरात्रे प्रकर्तव्यं प्रत्युषोऽनुग्रहान्वितम् ३८
मध्यरात्रे प्रभे चैव निरीक्षणादि विवर्जयेत्
उत्सवादौ तु सृष्टिं स्याद् उत्सवं मध्यमे स्थितम् ३९
संहारं कर्दमैर्युक्तं तिरोभावभ्रमेषु च
अनुग्रहे सर्वमित्युक्तं प्रतिष्ठाद्युत्सवेषु च ४०
प्रथमं वृषयान्यञ्च द्वितीयं पञ्च वाहनम्
तृतीयं पद्मपीठे तु चतुर्थं सिंहवाहनम् ४१
पंचमं गजरक्षार्थं षष्टमं च दशास्यकम्
सप्तमं व्याघ्रमेवोक्तं अष्टमं वाजिनामपि ४२
नवमं रथमारुह्य दशमं चासनेत्यपि
अम्बिका हंसमेवोक्तं भावयेद्रुद्रसंख्यया ४३
उत्सवादौ तु कर्तव्यं रक्षाबन्धनमेव च
हिलिके स्थण्डिले चैव विन्यसेत्क्रमुकादिभिः ४४
नाळिकेरं सवस्त्रं च हेमं स्वर्णे तु वृक्षकैः
कार्पासने समायुक्तं षट्त्रिंशत्तत्वपुत्रकैः ४५
भस्मगन्धाक्षतोपेतं अर्चयेत्तु शिवद्विजः
लकुळीशमनन्तं च विन्यसेद्वदसूत्रकम् ४६
भस्माधारे महामाया भस्मन्नामसदाशिवम्
धूपदीपं परिभ्राम्य चन्द्रशेखरमर्चयेत् ४७
पुरुषं कुंकुमप्रख्यं जटामकुटमण्डितम्
हरिणीमृगसंयुक्तं वरदाभयमेव च ४८
नानारूपधरं देवं नानाभरणभूषितम्

वामे गौरी समायुक्तं सद्योजातं सदाशिवम् ४९
पंचपात्रशिवो बिन्दु भूतपात्रे प्रदर्शितम्
घटमध्ये यथादीपं सर्वतस्संप्रकाश्यताम् ५०
पश्चिमाभिमुखं देवं पुरुषं पश्चिमाननम्
सद्येन पूजयेत्पूर्वं अघोरं दक्षिणाननम् ५१
सौम्ये वामसमायुक्तं सद्योजातेन पूर्वशः
ईशानस्सर्वविद्यानां अणुरप्ययमेव च ५२
कोटिसूर्यप्रभं देवं स्फुरत्ताराधिपप्रभम्
क्रियाब्रह्मप्रयोगेण शिवसांनिध्यमाचरेत् ५३
धूपदीपं परिभ्राम्य दक्षहस्तं निवेदयेत्
गौरीं च वामहस्ते तु बन्धयेत्र्यम्बकेण तु ५४
देशिकं दक्षिणे हस्ते बन्धयेद्धृदयेन तु
त्रिशूलं मध्यमे पत्रे सर्ववाहनकण्ठके ५५
धूपदीपं परिभ्राम्य पूर्वकर्म समाचरेत्
उत्सवादिषु सर्वेषां विशेषे तु शिवद्विजः ५६
नृत्तभ्रमणकाले तु पंकोर्ध्वे गृहदर्शनम्
नृत्तमूर्तिं तदूर्ध्वे तु चित्रकूटमलंकृतम् ५७
सौख्यनृत्ते तु कर्तव्यं देवस्याभिमुखेन च
भ्रामयेत्सहदेवाग्रे वारिवाहनवल्लिका ५८
प्रसूनं च ऋते भूमौ सर्वपुष्पाणि वर्षितम्
देवालयं समासाद्य भक्तसंख्यैस्तु घोषणैः ५९
देवीं गत्वा कवाटन्तु बन्धयेत्सेवकादिभिः
सेवकास्सर्वजात्ये तु यानयेत्परमेश्वरीम् ६०
रम्भापत्रेण कन्यासे वल्लकी गणिकादिषु
निरीक्षान्तसमायुक्तं चण्डेशानसमन्वितम् ६१
उत्सवादि प्रतिष्ठान्तं एकदेशिकमाचरेत्
जन्माशौचमृदाशौचे पद्मपत्रमिवाम्भसा ६२
देशिकंमनसा प्रीतिः शिवसायुज्यमाप्नुयात् ६३
इति पूर्वसहस्रे क्रियापादे यात्राविशेषो द्विचत्वारिंशत्पटलः ४५

४६
प्रासादस्थापनं वक्ष्ये शृणुष्वेवं महेश्वर
सर्वमासेषु कर्तव्यं विमानस्थापनं परम् १
उपानादिस्थूपिपर्यन्तं चित्रवर्णैरलंकृतम्
श्वेतं रक्तं तथा कृष्णं पीतं श्यामं समप्रभम् २
पंचवर्णैस्तु पंचैते पंचवक्त्रात्मरूपकम्
नागरं द्राविडं चैव वेसरं मुकुळाकृतिम् ३
सिंहवक्त्रं चतुर्देशे ऊर्ध्वदेशे सुनादकम्
ईशानं स्फटिकाकारं पुरुषं कुंकुमप्रभम् ४
अघोरमंजनप्रख्यं वामदेवं च रक्तकम्
सद्योजातं तु गोक्षीरं चतुर्देशे चोर्ध्वदेशकैः ५
स्फटिकाभं जगद्धेतुं त्रिणेत्रं चन्द्रमौळिनम्
सौम्यं प्रसन्नमीशानं त्रिशूलाभयपाणिकम् ६
पीताम्बरोपवीतं च नरं कनकसंनिभम्
मातुलुंगाक्षसूत्रं च दधानं चन्द्रमौलिनम् ७
त्र्यम्बकमंजनाभं च जटामकुटमण्डितम्
खड्गखेटकहस्तञ्चाघोरं घोरतरन्तथा ८
वामं रक्तं सुरक्ताभं अक्षमालामहोत्सवम्
सौम्यं स्त्रीरूपदेवेशं मनोन्मनि समन्वितम् ९
पीतस्रग्गन्धभूषाढ्यं सितोष्णीषं सिताम्बरम्
सौम्यमौलीन्दुसंपन्नं बालाकारं त्रिकोचनम् १०
सद्योजातं वितास्येकं वरदाभयपाणिकम्
चतुश्शालां प्रकल्प्यं च प्रासादं देहसंयुतम् ११
प्रासादं तु चतुर्देशे पंचाग्निं कल्पयेद्बुधः
दक्षिणामूर्तिदेशे तु मण्टपं चतुरश्रकम् १२
पंचाग्निर्विधिरुक्ते तु शान्तिकुम्भसमन्वितम्
सापिधानं समूर्तिं च वस्त्रकूर्चसमन्वितम् १३
शुद्धशैवस्तु कर्तव्यं स्नानकर्मसमन्वितम्
पंचांगभूषणोपेतं सोष्णीषस्सोत्तरीयकम् १४

विशेषार्घ्यं प्रकल्प्यं च गन्धपुष्पाक्षतान्वितम्
न्यासकर्माणि सर्वाणि विन्यसेद्धृदयेन तु १५
पुण्याह प्रोक्षणं कृत्वा पर्यग्निकरणानि च
प्रासादं वास्तुहोमं च पुनः पुण्याहमाचरेत् १६
शुद्धशैवैस्तु कर्तव्यं पारंपर्यशिवार्चनम्
कर्तव्यं विधिरित्युक्तमन्यराष्ट्रमकल्मषम् १७
शिवोहं भाव्यदेहं च पुनरस्त्रान्तसंयुतम्
शिवहस्तं प्रकल्प्यन्तं शिवोहं भाव्यदेशिकैः १८
विशेषार्घ्यं प्रकल्प्यं च होतारश्च चतुर्दिशि
पूर्वोक्तशालदेवाश्च विन्यसेत्कुम्भमध्यमे १९
पंचावरणमार्गेण पूजयित्वा पृथक्पृथक्
नैवेद्यं पंचवर्णं चापूपादि फलान्वितम् २०
ताम्बूलं धूपदीपं च प्राधान्ये ज्ञेयरूपवान्
प्रत्येकं दशसहस्रं च तद्दण्डखदिरं तथा २१
ताम्रादिरजतं स्वर्णं चान्द्रपक्षेण निर्मितम्
सौरपक्षे प्रतिष्ठाप्य अधिवासमिहोच्यते २२
तद्दण्डे निष्कलं तत्वं षट्त्रिंशन्मूर्तिविग्रहम्
षडध्वा विन्यसेद्दण्डे किं तु तत्वत्रयं न्यसेत् २३
त्रयोदश सहस्रं च होमयेत्पूर्वमेव च
मूलब्रह्मादिदैवत्यं मध्ये माधवदैवतम् २४
तदग्रे शंकरं प्रोक्तं तदग्रे शक्तिमण्डलम्
तदग्रे भगवान्शक्तिं तदग्रे भगवान्शिवः २५
मध्याह्ने स्थपतिः प्रोक्तं स्थापकेन समन्वितम्
दण्डमूर्तिं परिभ्राम्य वस्तुवास्तु समन्वितम् २६
देशिकं पाददेशे तु वस्त्रबन्धपरिक्षितम्
स्थपतिर्लक्षणैर्युक्तं तत्र कर्म परिक्षितम् २७
नादं नानादिकं प्रोक्तं बिन्दुनादसमन्वितम्
शून्यमंत्रोपदेशं च पृथक्छाया परिक्षितम् २८
शून्यमंत्रशतं जप्वा तत्रभक्तेषु योनिषु

बिन्दुकोणप्रभूतं च भूतान्ते तु त्रिकोणकम् २९
नवरत्नानि विन्यस्य नवशक्तिर्महामनुः
सप्तधान्यं प्रकर्तव्यं सप्तधातुस्य नामयुक् ३०
प्रणवादिनमोन्तं च स्वस्वनाम्ने तु पूजयेत्
स्थपतिं च करे स्थित्वा दण्डं संगृह्यमेव च ३१
ओमिति ब्रह्ममन्त्रेण स्थापयेत्सौरनासिकाम्
गन्धैस्तु विविधैश्चैव एकभस्मसमन्वितम् ३२
कुंकुमागरुमेच्यं च गुळमारस्य शर्करः
बन्धयेद्वालुकादीषु दर्पणोदरसंनिभम् ३३
स्थपति स्थापकोपेतं गच्छयेद्यागमाश्रितम्
स्थपतिर्वर्जयेत्कृत्वा देशिकं प्रीयमानसः ३४
ईशानादिषु वक्त्रैश्च होमयेच्छतमूर्तिषु
पुण्याहप्रोक्षणं कृत्वा कुम्भमूर्तिं हृदि न्यसेत् ३५
ईशानमूर्तिविन्यस्य मुखे तत्पुरुषेण तु
अघोरं हृदिविन्यस्य गुह्यस्थाने सुवामकैः ३६
सद्योजाताकृतिर्देहं मंत्ररूपं सदाशिवम्
संयोज्य कुम्भदेवेषु देशिकं मूर्ध्वमाश्रितम् ३७
आवाह्य मूलमंत्रं च क्रियाब्रह्मसमन्वितम्
वस्त्रैराभरणैर्माल्यैः अलंकृत्य विशेषतः ३८
नैवेद्यं धूपदीपं च उपचाराणि सर्वशः
ज्ञानज्योतिर्मयं लिंगं शरच्चन्द्रवदुज्वलम् ३९
भ्रूमध्ये संस्थितं तत्र मनः प्रा+ ञ्च योजयेत्
वस्त्रैराभरणैश्चैव चण्डेशाय निवेदयेत् ४०
चण्डेशाय निवेद्यार्थं समाचार्याय प्रदापयेत्
कुम्भदेवं समाश्रित्य पुनः पंचसहस्रकम् ४१
पूर्णाहुतिं क्षिपेत्कृत्वा दर्पणे तु प्रतिष्ठितम्
गव्यपंचामृतोपेतं शान्तिमंत्रेण संयुतम् ४२
भूतकुम्भेन सर्वत्र अभिषिच्य यथाविधि
शालादेवं च सर्वत्र गन्धपुष्पाक्षतान्वितम् ४३

पंचावरणमार्गेण पूजयेद्देशिकोत्तमः
प्रासादं देहमित्युक्तं लिंगं प्रणवमुच्यते ४४
आचार्यमनसा प्रीतिः होतृभिः स्थपतिस्सह
यथाशक्तिं समभ्यर्च्य शिवसायुज्यमाप्नुयात् ४५
इति पूर्वसहस्रे प्रतिष्ठातन्त्रे क्रियापादे प्रासादस्थापनविधिः
त्रयश्चत्वारिंशत्पटलः ४६

४७
रथसंप्रोक्षणं वक्ष्ये शृणुष्वेवं जनार्दन
प्रतिसंवत्सरादूर्ध्वं भ्रामयेन्नवरोधनम् १
अग्निदग्धे च चण्डाले स्पर्शनेदशुचिस्थिते
यानकाले नृपतिते स्फोटने भ्रामणेष्वपि २
चर्मरज्जुसुसंबद्धे दण्डवत्पतिते भुवि
पंचसप्तनवाहेषु रथारोहणपूर्वयुक् ३
नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यसंयुतम्
पंचाहे कन्यसं ज्ञेयं रथारोहणसंभवे ४
रथे च पूर्वदिग्भागे पश्चिमे यागमर्चनम्
अंकुरं पूर्ववत्कृत्वा तदूर्ध्वे मण्डलत्रयम् ५
नाळिकेरफलोपेतं मण्टपं चतुरश्रकम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ६
तन्मध्ये वेदिकाशाली तिलतण्डुलसंयुतम्
लाजैः पुष्पैः परिस्तीर्य कूर्चोपविष्ठरम् ७
दळाष्टकसमोपेतं तन्मध्ये शिवकुम्भकम्
द्रोणत्रयजलं कुम्भं शिवपूर्णं तु वर्धनीम् ८
दळाग्रेष्वष्टकलशैः चूतपल्लवकूर्चकैः
चतुर्द्वारसमोपेतं पूर्वादीशान्तसंयुतम् ९
भ्रामयेत्कलशे वस्वमित्रादीशानैवतम्
सौम्ये पाशुपतं कुंभं स्थापयेत्कर्करी सह १०
वेदिका पश्चिमे भागे स्थण्डिलेष्टदळैर्युतम्

सौम्यदक्षिणमध्यस्थे लेखने कुम्भमेव च ११
अभिधानादि सर्वेषां अलंकृत्य शिवद्विजैः
रथवास्तुहुतिं मध्ये शुध्यर्थं तु शताहुतिम् १२
पर्यग्निकरणं कृत्वा भ्रामयेत्त्रिविधं परम्
सामान्यार्घ्यसुसंकल्प्य करन्यासं समन्वितम् १३
पूर्वादीशानपर्यन्तं अर्चयेद्वसुपालिकाः
मण्डलं दक्षिणे भागे भूतशुध्यादिमाचरेत् १४
तदूर्ध्वं त्रितयं कुंभं विशेषार्घ्यसमन्वितम्
ब्रह्मविष्णुहराणां तु तत्तद्वर्णस्वरूपयुक् १५
गन्धपुष्पादिनाभ्यर्च्य धूपदीपसमन्वितम्
प्राधान्ये मण्डलं श्रित्यं पुनरर्घ्यं समन्वितम् १६
आसनं मध्यमे कुम्भे आधाराख्यमनन्तकम्
पद्मकेसरगन्धाद्यैः अर्चयेत्कुम्भमौलिषु १७
मोहिनीमूर्ध्वतत् शक्तिं भावयेद्देशिकोत्तमः
ऐशान्ये कर्करीमूर्ति शक्त्यादिशक्तसंयुतम् १८
पूजयेद्धूपदीपैश्च चरुनैवेद्यमेव च
पूर्वादिकलशैरष्टधर्मादिरष्टमूर्तिषु १९
गन्धपुष्पं च धूपं च दीपं चैव निवेदितम्
होमयेत्पूर्वदिग्भागे मण्डले स्थण्डलेऽपि वा २०
पंचसंस्कारमार्गेण होमयेत्तु चतुश्शतम्
शुद्धतैलैर्मुखद्रोणैः दहना प्लावनं तथा २१
तैले च होमयेत्पंचविंशतिं च हुनेत्सुधीः
शेषतैलेन मर्दन्यां मूलाग्रं मध्यमे रथम् २२
पुण्याह प्रोक्षणं कृत्वा वृक्षतैलेन वर्जयेत्
वृक्षतैलस्य मर्दिन्यां राष्ट्रस्य कलहं भवेत् २३
शुद्धतैलेन निर्मृज्य राजराष्ट्रसुखप्रदम्
पंचगव्येन संप्रोक्ष्य पंचभूतानि शोधयेत् २४
रथन्यासविधिं चैव शृणुष्वेवं जनार्दन
शकटे चन्द्रसूर्यस्य द्वादशादित्यमध्यमे २५

तदूर्ध्वे ब्रह्मभागेन स्रावाहनविधिस्तथा
विष्णुभागे न्यसेद्विष्णुं पूर्वोक्तविधिना सह २६
तदूर्ध्वे विन्यसेद्रौद्रं द्वात्रिंशत्प्रतिमार्चयेत्
कलारूपमधिष्ठाने अर्चयेत्तु शिवद्विजैः २७
धूपदीपं हृदा दत्वा वेदघोषैरलंकृतम्
अधिष्ठाने सुमध्यस्थे शिवासनाय चतुष्टयम् २८
धर्मज्ञानं च वैराग्यं चतुर्दिक्षु विदिक्ककैः
अर्चयेद्धूपदीपं च इन्द्रादिकलशान्वितैः २९
पाशुपतेन कुम्भं च विधिना प्रोक्षणं च तु
इन्द्रादि लोकपालाद्यैः तत्तत्स्थाने रथस्य च ३०
ब्रह्मकुंभं समुद्धृत्य शकटाग्रेऽभिषेचयेत्
विष्णुकुम्भं प्रतिष्ठाप्य तद्भागे योजयेद्द्विजैः ३१
रुद्रेण रुद्रभागस्य अभिषेकं जनार्दने
प्राधान्ये दशसंहृत्य शकटाग्रेऽभिषेचयेत् ३२
विष्णुकुंभं प्रतिष्ठाप्य मध्यमे मध्यमे न्यसेत्
कर्करीकुम्भभागे च अभिषेकं विधीयते ३३
धर्मादीनि यथा स्थाने तत्तत्स्थानेऽभिषेचनम्
मार्जनं हस्तसंयुक्तं अर्चयेदुक्तपूर्ववत् ३४
षडाधारे षडध्वा च भावयेद्देशिकोत्तमैः
नैवेद्यमानसौमंत्रं कैलासं त्रिदशेश्वरम् ३५
त्रिंशत्त्रिकोटिदेवानां रथाग्रे मध्यमूर्तिषु
भावयेत्पनमाचार्ये तन्मूले बन्धयेत्कदम् ३६
कदम्बेन समभ्यर्च्य अष्टचक्रं न्यसेत्ततः
सर्वघोषैरलंकृत्य चित्रदामैश्च मण्डवत् ३७
सोमास्कन्देश्वरं प्रोक्तं चन्द्रशेखरमेव च
हर्मुखं देवदेवीनामारोप्य देशिकैर्युतम् ३८
देवदक्षिणादिग्भागे रुचिरासनसंस्थितम्
मूलमन्त्रन्नमस्कृत्य दशमेकं मनुं जपम् ३९
विष्णुभागेन ++ प्रोक्तं स्थानाचार्यसमन्वितम्

तदूर्ध्वैनर्त्तदारूपं सर्वलक्षणसंयुतम् ४०
विन्यसेदन्यथास्थाप्य तत्कर्ता नरकं व्रजेत्
अन्यथा जनमारोप्य राजराष्ट्रं विनश्यति ४१
रोपयेदन्यथा कृत्वा पुनरुत्सवमाचरेत्
तद्ग्रामे ज्वररोगादि परचक्राद्भयं नृपः ४२
तत्कर्ता शीघ्र नश्यन्ति त्रिमासेन त्रिवर्षिके
प्रायश्चित्तविधिर्नास्ति पुनरुत्सवमाचरेत् ४३
पूर्वोक्तसंख्ययारोप्य राजराष्ट्रं सुखं भवेत्
पूर्ववत्स्थानमाश्रित्य नित्यपूजां समाचरेत् ४४
मध्याह्ने पूर्वमाश्रित्य शान्तिहोमं समाचरेत्
मध्याह्ने तु समाश्रित्य मूर्तिहोमं सदाहुनेत् ४५
संध्या तत्कालमाश्रित्य दिशाहोमसहस्रकम्
अर्धरात्रेण संश्रित्य होमयेत्त्रिविधस्य च ४६
अपरे दिनमाश्रित्य तन्मूलं लक्षचाहुतिम्
आचार्यदक्षिणां दद्याद्वस्त्रहेमांगुलीयकैः ४७
रथप्रोक्षणमित्युक्तं स्थापनं वक्ष्यते रथम्
साम्राज्यं संपदं प्राप्य शिवसायुज्यमाप्नुयात् ४८
इति पूर्वसहस्रे क्रियापादे रथारोहणविधिः चत्वारिंशत्पटलः ४७

## वटुकस्थापनविधिः ४८

वटुकस्थापनं वक्ष्ये शृणुष्वेवं जनार्दन
उत्तरायणकाले तु सुमुहूर्ते सुलग्नके १
अंकुरं पूजयेद्विद्वान् सुमुहूर्ते विशेषतः
देवरूपाकृतिं वक्ष्ये शृणुष्वेवं चतुर्भुज २
एकवक्त्रं त्रिणेत्रं च सिंहारूढं सुभीषणम्
कपालं दण्डहस्तस्तु कटिसूत्रञ्च भूषितम् ३
चित्रवस्त्रधरं देवं नागयज्ञोपवीतिनम्
मुण्डमालाधरं देवं समदृष्टिस्तथैव च ४
एवं प्रधानमाख्यातं तामसाद्यैस्त्रिधा भवेत्

एवं ध्यात्वा विशेषेण चापदुद्धारणं शिवम्  ५
सुवारे सुतिथौ ऋक्षे दृष्टिमण्डलमालिखेत्
पंचरात्रिमुनिन्नाडी विन्यसेज्जलमध्यमे  ६
ग्रामप्रदक्षिणं कृत्वा यागशालं समाविशेत्
षट्त्रिंशद्धस्तसंयुक्तं मूर्तिस्तम्भसमन्वितम्
मध्ये वेदिं प्रतिष्ठाप्य पञ्चाग्निं भ्रामयेत्सुधीः
गोमयालेपनं कृत्वा मुक्तादामैरलंकृतम्
रम्भादिचूतमश्वत्थं चतुर्द्वारे प्रतिष्ठितम्  ७
शालिभिः स्थण्डिलं कृत्वा तिललाजसमन्वितम्
वासोर्ध्वे विन्यसेत्पद्मं साष्टपत्रं सकर्णिकम्  ८
पूर्वादीशानपर्यन्तं भ्रामयेत्सप्तविंशतिम्
सप्तविंशद्घटे स्थाप्य शान्त्यादिद्वारदेवताः  ९
वासोर्ध्वे विन्यसेत्कुम्भं द्रोणत्रयजलान्वितम्
पूर्वादीशानपर्यन्तं कर्करीमूर्तिसंयुतम्  १०
ऐशान्ये वर्धनीं कृत्वा भ्रामयेत्कुंभसंयुतम्
चूताश्वत्थैरलंकृत्य नाळिकेरसुवर्णकैः  ११
शयनवासं समीपे तु निद्राकुम्भञ्च विन्यसेत्
पंचकम्बळमूर्ध्वे तु विन्यसेद्वटुकेश्वरम्  १२
स्नापयेद्धोतृभिस्सार्धं पंचांगैर्भूषणैस्सह
यागद्वारं समाश्रित्य रुचिरासनमेव च  १३
सामान्यं कल्पयेद्विद्वान् प्रोक्षयेद्यागमन्दिरम्
शान्त्यादि द्वारपालेभ्यो पूजयेद्धूपदीपकैः  १४
वेदिको दक्षिणे भागे भूतशुध्यन्तरीयकम्
वासोर्ध्वे मूलमंत्रैश्च षट्त्रिंशत्तत्वसंहितैः  १५
षडध्वान्न्यासयेन्मूलं मूलमंत्रेण वाहनम्
रक्तवर्णं त्रिणेत्रं च सिंहवाहनरूढकम्  १६
किङ्किङी सव्यसंयुक्तं कटिसूत्रं कमण्डलुम्
कोटिसूर्यप्रतीकाशं भावयेत्कुम्भमध्यमे  १७
क्रिया ब्रह्मप्रयोगेण हेतुसंयुतसंयुतैः

नैवेद्यं धूपदीपं च पूजयेद्वर्धनी सह १८
वर्धनीं द्विभुजां ध्यात्वा करराडमकुटान्विताम्
खड्गखेटकहस्ताञ्च श्यामवर्णां च शान्तयुक् १९
रौद्रीं विभावयेद्विद्वान् विन्यसेत्कर्करीं हृदि
पूर्वादीशानपर्यन्तं ग्रसितांगादिभैरवान् २०
ब्राह्मीमाहेश्वरी सप्तचरिडका मातृपुत्रकैः
नासिका वेटमध्ये तु ग्रसितांगं प्रतिष्ठितम् २१
तत्तद्धटोर्ध्वे मातृभिश्चराडीमूले तु होमयेत्
दशपालान्प्रपूज्यन्ते धूपदीपं निवेदयेत् २२
होमयेत्पंचवह्नेषु क्षिपेत्पंचसहस्रकम्
पूर्ववन्मनुनां सर्वे होमयेन्मूर्तिकुम्भवत् २३
धूपदीपं च नैवेद्याद्युपचाराणि भावयेत्
बेरमष्टकषावेस्थान् मृदं चैव सुगन्धवत् २४
स्नापयेत्पंचगव्ये तु तिंत्रिणी मर्दनान्वितम्
स्नापयेद्रोचनोपेतं प्राक्छिराश्शाययेच्छिवम् २५
ग्रन्यथा स्थापयेद्देवं मंत्रन्यासं च पूर्ववत्
दर्भकूर्चं शिरो न्यस्य विन्यसेद्देशिकोत्तमः २६
निद्राकुम्भे शिवं ध्यात्वा कपालं ब्रह्मदराडकम्
द्विनेत्रं शान्तवदनं किंचित्प्रहसिताननम् २७
निद्रादेवं समभ्यर्च्य ग्रनन्तादिशिखरिडनम्
होमयेद्धोतृभिस्सार्धं मूलमंत्रेण मंत्रवित् २८
प्रणवं बिन्दुनादं च मायाबीजसमन्वितम्
वटुकाय नमः स्वाहा मूलमंत्रसमन्वितम् २९
नैवेद्यं धूपदीपं च न्यासयेत्तत्वपूर्वशः
श्रीकराठं तत्वमात्रं वा मन्त्रन्याससमन्वितम् ३०
षडध्वन्यासयेत्सर्वं त्रिखराडाध्वा तु विन्यसेत्
जानुकराठशिरस्थाने ग्रात्मविद्या शिवात्मकम् ३१
प्रतिसरं बन्धयेद्देवं रात्रौ निद्रां विवर्जयेत्
प्रत्युषं स्थापकोपेतै स्नापयेद्धोतृभिस्सह ३२

यागद्वारं समाश्रित्य यागपूजे तु पूर्ववत्
पूर्वादीशानपर्यन्तं होमतर्पणतत्परैः  ३३
निद्रादेवं समुद्धृत्य स्नापयेदुदकादिभिः
मंत्रन्यासं कलान्यासं अष्टत्रिंशत्कलान्यसेत्  ३४
तत्वत्रयं न्यसेत्पश्चात् धूपदीपं निवेदनम्
पूर्ववदुपचारैस्तु होमयेत्पूर्वसंख्यया  ३५
पूर्णान्तं वह्निदेवं तु कुम्भमूर्ध्नि नियोजयेत्
स्थापनं संनिधानं च संनिरोधनमेव च  ३६
अवगुण्ठनपंचैते महायोनिं प्रदर्शयेत्
पुनः कुण्डाम्भसा प्रोक्ष्य कुण्डमध्ये महेश्वरम्  ३७
कुण्डाग्रे सप्तधातुं स्याद्दिशि देवं च मातृभिः
असितांगादि सर्वेषां मेखलोपरि विन्यसेत्  ३८
न्यासयेत्संहितामंत्रैः होमयेन्मूलमंत्रकैः
शतमूर्ति हुनेत्पश्चाद् तत्तन्मंत्रेण देशिकः  ३९
देवाग्निं बिम्बमध्ये तु कोटिसूर्यसमप्रभम्
स्थापनं संनिधानं च संनिरोधनमेव च  ४०
नैवेद्यं धूपदीपं च उपचारं समन्वितम्
द्वारदेवादिसर्वेषां पूर्वस्थाने नियोजयेत्  ४१
द्वारस्य पुरतो सिंहं पीठं चैव निवेशयेत्
शंखकाहळवाद्येषु ब्रह्मभेरीं तु झर्झरीम्  ४२
मर्दळैर्भेरिकोपेत ब्रह्मघोषसमन्वितम्
हर्म्ये प्रदक्षिणं कृत्वा बेराग्रे सन्निवेशयेत्  ४३
कुम्भाद्देवं प्रतिष्ठाप्य नैवेद्यं धूपदीपकैः
ब्राह्मणान्स्वस्तिवाद्यै तु पंचशान्तिश्च घोषणैः  ४४
मूर्तिकुम्भात्समुद्धृत्य स्नापयेद्धृदयान्वितम्
अभितः कर्कटे मूर्तिं तालमध्ये तु विन्यसेत्  ४५
रक्तवस्त्रधरं देवं नानाभरणभूषितम्
सुगन्धपुष्पकह्लारैः दीपयेदुपचारकैः  ४६
धूपदीपं च नैवेद्यं महाहविर्निवेदयेत्

ताम्बूलं मुखवासं च धूपदीपं समन्वितम् ४७
नीराजनविधिस्सर्वमुपचाराणि सर्वशः
एवं स्थापनमाख्यातं उत्सवं शृणु माधव ४८
उत्सवं वटुकेशस्य प्रतिसंवत्सरं नयेत्
ध्वजं तु पूर्ववत्कुर्याद् ध्वजे सिंहं समालिखेत् ४९
तत्पुरुषाय विद्महे नखतीक्ष्णाय धीमहि
तन्नः सिंहः प्रचोदयात् ५०
चतुर्वेदाय विद्महे धर्मपिण्डाय धीमहि
तन्नस्सिंहः प्रचोदयात् ५१
गायत्रीं चैव सावित्रीं सिंहस्य समुदाहृतम्
यागशालार्चनं होमं स्थापनोक्तवदाचरेत् ५२
प्रथमे वाह्निमध्ये वा कौतुकं बन्धयेच्छिवे
बलिदाने विशेषोऽस्ति तद्वक्ष्यामि जनार्दन ५३
रक्तान्नं मांससंयुक्तं मध्याह्ने त्वर्धरात्रिके
देवताह्वानदेशेषु बलिं तत्र विनिक्षिपेत् ५४
त्रिशूलेन सहोपेतं गन्धपुष्पजलान्वितम्
पारशैवं शुचिर्भूतं अन्यथा राष्ट्रदोषकृत् ५५
शिरोबन्धनसंयुक्तं हृतमूलं करैस्तथा
बलिपीठसमोपेतं शकटोर्ध्वे स्थितेन च ५६
वटुके शास्त्रसंयुक्तं ग्रामस्य भ्रमणं नयेत्
पूर्वादीशानपर्यन्तं भैरवाय बलिं ददेत् ५७
असि तांगो रुरुश्चण्डः क्रोधभोन्नृत्तभैरवम्
कपालभीषणश्चैव संहारेशानमेव च ५८
तत्तद्देशे त्रिशूलेन पूजयेन्नाममन्त्रकैः
शेषान्नं भूतवेताळ पैशाचा ब्रह्मराक्षसाः ५९
काळिकोष्ठे श्मशानस्य शेषान्नं बलिनिक्षिपेत्
वास्तुशुद्धिः प्रदातव्यं काळिकोष्ठे बलिं क्षिपेत् ६०
देवालयं समाश्रित्य दक्षिणाभिमुखं शिवम्
पूजयेद्धूपदीपाद्यैः मुखवाससमन्वितम् ६१

नित्यं नीराजनोपेतं इष्टकाम्यार्थसिद्धये
विशेषवलिरास्यातन्नित्यं पूर्ववदाचरेत्  ६२
देशिकाय च वस्त्रं स्याद्गोभूहिरण्यमेव च
हेमाङ्गुली तु निष्कं स्याद्दशनिष्कं प्रदापयेत्  ६३
आचार्यमनसा प्रीतिः शिवसायुज्यमाप्नुयात्
शुद्धशैवेन कर्तव्यं धनधान्यसमृद्धिदम्  ६४
वर्जयेदन्यथा शैवं राजराष्ट्रं विनश्यति  ६५
इति पूर्वसहस्रे क्रियापादे वटुकास्थापनोत्सवपटलः  ४८

## बेरयात्राविधिः  ४९

बेरयात्राविधिं वक्ष्ये सर्वप्राणि सुखावहम्
उत्सवं नवविधं प्रोक्तं पवित्रं च महोत्सवम्  १
वसन्तं मदनोपेतं कृत्तिकार्द्रासमन्वितम्
पुष्यरात्रिसमायुक्तं नित्यं नवविधोत्सवम्  २
त्रिसंध्यं युग्मसिद्धिं च महोत्सवसमन्वितम्
पवित्रं शिवसंधिं स्याद्बेरयात्रा विशेषतः  ३
मदने सन्धियुग्मे तु भ्रामयेद्वटुकेश्वरम्
वसन्ते चन्द्रसंधिं स्यादान्दशास्त्रे शिवस्य च  ४
पवित्रे मदनोपेतं यागोपकरणं स्वजे
ऐशान्ये पावके सौम्ये षट्त्रिंशत्षोडशेऽपि वा  ५
मूर्तिस्तम्भसमायुक्तं पंचाग्निं वा नवाग्निकम्
मध्ये वेदीं प्रतिष्ठाप्य दर्पणोदरसंनिभम्  ६
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
मंगळाष्टायुधाष्टं च सकूर्मासनमित्यपि  ७
स्रुक्स्रुवे शुद्धशैवस्तु अन्यशैवैर्नकारयेत्
अन्यशैवैर्नकर्तव्यं कर्तव्यं शुद्धशैवकैः
शुद्धशैवैस्तु कर्तव्यं राजराष्ट्रसुखावहम्  ८
अन्यशैव कृतं प्रोक्तं राष्ट्रक्षोभां मतिभ्रमम्
राष्ट्रनाशं धनैर्युक्तं शळभञ्च समाश्रितम्

गरुडुकादीनि ।
समिच्चूतदळोपेतं तिलदर्भाक्षतान्वितम् ९
सुपुष्पं गन्धरोच्येषु संगृहेन्मृद्धटैस्सह
मंत्रेण शुद्धयेद्धाव्यं दिव्य दृष्टि समन्वितम् १०
अपिधानादि सर्वेषां अभिमंत्र्य तदूर्ध्वकैः
जलपात्राणि सर्वेषां अभिमंत्र्य मुखो रसः ११
दिग्बन्धनावकुण्ठन्तु शूलमुद्रां प्रदर्शयेत्
शालिभिः स्थंडिलं कृत्वा स्थापयेद्यागमन्दिरम् १२
दळाष्टकसमोपेतं मूर्तिकुम्भं प्रतिष्ठितम्
ऐशान्ये मध्यमं स्थाप्य शिवकुम्भञ्च वर्धनीम् १३
चूताश्वत्थदळोपेतं नाळिकेरफलान्वितम्
रक्तगंधोदकैः पूर्यमभिधान्यादि पूर्ववत् १४
पूर्वादीशानपर्यन्तमन्यतादिशिखण्डयकम्
वारुङादि निर्ऋृत्यन्तमेकरुद्रञ्च नेत्रकम्
मध्ये सदाशिवं कुम्भं ऐशान्ये वा मनोन्मनीम् १५
मंगळाष्टं च जीवे तु श्रीवत्सं शंखमित्यपि
शक्तिमंत्रेण जीवे तु करणैः काळिभिस्सह १६
द्वारावृतवरेण्ये तु वृषभादिगणेश्वरम्
आयुधादीनि सर्वेषां पाशखड्गैस्सुजीव हि १७
ऐशान्ये नैर्ऋृते इन्द्रं लोकेशमनुभिस्सह
वारुणादिनिर्ऋृत्यन्तं वारणादिषु राक्षसे १८
विद्येशादीनि सर्वेषां वास्तुबिन्दुसमाश्रितम्
पंचाग्नौ च नवाग्नौ तु पंचब्रह्मषडंगभिः १९
आरम्भेत्यवग्रेषु नाशने तच्छिवाधिपम्
उत्सवादिप्रतिष्ठान्तं पंचवक्त्रकृतेऽपि वा २०
क्रियारम्भे क्रियादर्या बलिभावसमन्वितम्
तद्भेदं भ्रमणोपेतं यामद्वारे निरीक्षणम् २१
पाद्यमाचमनं दद्याद् अर्घ्यदानादितिस्सह
ताम्बूलमिक्षुसारे तु नाळिकेरद्विधामति २२

धूपदीपं परिभ्राम्य आरात्रिकसमन्वितम्
पुष्पलाजदळोपेतं करमध्ये प्रपूरितम्  २३
तल्लाजतद्दळोपेतं सर्वप्राणिसुखावहम्
तद्दळेन सहोहीनं धनधान्यविवर्जितम्  २४
तद्रूपममृतोपेतं तत्र मध्येऽमृतेश्वरम्
यागस्संदेशिकस्यैव बेरं वै वटुकेश्वरम्  २५
मूलस्थमनुराधारं होतृभिः पंचवक्त्रयुक्
होतृभिर्देशिकोपेतं षड्वक्त्रं तत्र मूलवत्  २६
मूलवद्ब्रह्मचैतन्यं षट्त्रिंशच्छक्तिजालकम्
देशिकं कर्तसादाख्यं होतृभिः पंचकृत्यपि  २७
मौनमंत्रजपं कृत्वा घोषणैर्मानुरुच्यते
सर्वा एति विश्वे तु त्रियम्बकब्रह्ममग्निषु  २८
ब्रह्माविष्णुमहेशानं शक्तिश्शिवसमन्वितम्
ओमिति ब्रह्ममंत्रेण देशिकं घोषणैस्सह  २९
यागदेवगृहं प्रोक्तं भ्रामयेत्तु यथोचितम्
देशिकं सव्यभागे तु होतृभिः शिवयागवत्  ३०
सव्यभागे तु कर्तव्यं देशिकं शिष्यसंयुतम्
वामभागे द्विजा घोषं चतुर्वेदसमन्वितम्  ३१
पृष्ठभागे मतंगे तु नानावाद्यं समन्वितम्
नानाघोषसमोपेतं पृष्ठपार्श्वे तु चारकम्  ३२
गर्भिणी दिनयात्रेषु पादांगुष्ठे पदे पदे
गणिकादिभिस्सर्वेषां बिन्दुवक्त्रं सुवक्त्रकैः  ३३
पूर्वाह्णे शान्तिकं प्रोक्तं सायाग्ने सर्वसिद्धिकम्
मध्याह्ने मध्यरात्रौ तु राजराष्ट्रं विनश्यति  ३४
पंचाहे कृष्णगन्धं स्यात् चन्द्रशेखरमीश्वरम
नवाहे वा विधातव्यं नृत्तपंकोत्सवेषु च  ३५
अधिवासे तु तद्गन्धं प्रासादे तु प्रदक्षिणम्
संहारन्देवसंसिच्य गृहे सप्ततिरो भवेत्  ३६
अर्धरात्रा प्रकर्तव्यं प्रत्युषोनुग्रहान्वितम्

मध्यरात्रौ प्रभेश्चैव निरीक्षणादि विवर्जयेत् ३७
उत्सवादौ तु सृष्टिं स्याद् उत्सवे मध्यमे स्थितम्
संहारं कर्दमैर्युक्तं तिरो भाव भ्रमेषु च ३८
अनुग्रहे सर्वमित्युक्तं प्रतिष्ठाद्युत्सवेषु च
प्रथमं वृषयागं च द्वितीयं पंचवाहनम् ३९
तृतीयं पद्मपीठे तु चतुर्थं सिंहवाहनम्
पंचमं गजरक्षार्थं षष्ठमं च दशास्यकम् ४०
सप्तमं व्याघ्रमेवोक्तं अष्टमं वाजिनामपि
नवमं रथमारोप्य दशमं चासनेत्यपि ४१
अम्बिकाहंसमेवोक्तं भावयेद्रुद्रसंख्यया
उत्सवादौ तु कर्तव्यं रक्षाबन्धनमेव च ४२
स्थण्डिले स्थण्डिले चैव विन्यसेत्कुमुदादिभिः
नाळिकेरं सवस्त्रं च हेमं स्वर्णे तु वृक्षकैः ४३
कार्पासने समायुक्तं षट्त्रिंशत्तन्तु वृक्षकैः
भस्मगन्धाक्षतोपेतमर्चयेत्तु शिवद्विजः ४४
लकुळीशमनन्तं च विन्यसेद्रुदसूत्रकम्
भस्माधारे महामाया भस्मन्नाम सदाशिवम् ४५
धूपदीपं परिभ्राम्य चन्द्रशेखरमर्चयेत्
पुरुषं कुंकुमप्रख्यं जटामण्डलमण्डितम्
हरिणी मृगसंयुक्तं वरदाभयमेव च
नानारूपधरं देवं नानाभरणभूषितम् ४६
वामेगौरीसमायुक्तं सद्यो जातं सदाशिवम्
पंचपात्रशिवो बिन्दुभूतपात्रे प्रदर्शितम् ४७
घटमध्ये यथादीपं सर्वतस्संप्रकाश्यताम्
पश्चिमाभिमुखं देवं पुरुषं पश्चिमाननम्
सद्येन पूजयेत्पूर्वं अघोरन्दक्षिणाननम्
सौम्ये वामसमायुक्तं सद्योजातेन पूर्वशः
ईशानसर्वविद्यानां अणुरप्ययमेव च
कोटिसूर्यप्रभं देवं स्फुरत्ताराधिपप्रभम् ४८

क्रियाब्रह्मप्रयोगेन शिवसांनिध्यमाचरेत्
धूपदीपं परिभ्राम्य दक्षहस्ते निवेदयेत्  ४९
गौरीं च वामहस्ते तु बन्धयेत्त्र्यम्बकेण तु
देशिकं दक्षिणे हस्ते बन्धयेद्धृदयेन तु  ५०
त्रिशूलमध्यमे पत्रे सर्ववाहनकण्ठके
धूपदीपं परिभ्राम्य पूर्वकर्म समाचरेत्  ५१
उत्सवादौ तु मध्ये वा कारयेत्कौतुकक्रियाम्
ध्वजसिंहप्रतिष्ठां च प्रवक्ष्यामि जनार्दन  ५२
ध्वजमध्ये तु पद्माक्षा महासिंहं समुल्लिखेत्
श्वेतवर्णं तु रक्तास्यं पीतवर्णसमन्वितम्  ५३
रक्तपादसमायुक्तं व्याबृतास्यं सुभीषणम्
ग्रामादिमुखसंस्थानं ग्रामादिभ्रमणे विषम्  ५४
वृषभस्योक्तमानेन कारयेत्सिंहनायकम्
छत्रचामरसंयुक्तं पद्मासनसमन्वितम्  ५५
पाश्यदीपसमायुक्तं त्रिवर्णनयनोज्वलम्
पंचास्यमेवं संपाद्य सवस्त्रं कूर्चसंयुतम्  ५६
मध्ये कुम्भेशसिंहं स्यात् परितोऽष्टघटस्थितान्
हेतुकादिं च संस्थाप्य मध्ये सिंहं प्रपूजयेत्  ५७
आधाराख्यमनन्तं च धर्मादींश्च चतुष्टयम्
सिंहासनपदश्चित्तौ चतुर्थ्यन्तं हृदान्वितम्  ५८
मायाबीजं समुद्धृत्य सिंहमूर्तिं प्रकल्पयेत्
ब्रह्मण्येवं प्रविन्यस्य तन्मूलं तु प्रकल्पयेत्  ५९
ओं ह्रीं कारं ततः कृत्वा सिंहनाथेति चोद्धरेत्
महावदन इत्येव नारसिंहेति चोद्धरेत्  ६०
पुत्रायेति पदं चार्थ वटुकाख्येति चोद्धरेत्
महेशाय पदं चोक्त्वा स्वाहावेदीवमुधरेत्  ६१
एतन्मूलं महादिव्यं सिंहनाथस्य माधव
प्रकल्पतां हृदादींश्च मायाबीजेन कारयेत्  ६२
गायत्रीं चैव सावित्रीं क्रमेणैव समर्चयेत्

तत्वतत्वेश्वरोपेतं मूर्तिमूर्तीशपूर्वकम् ६३
मध्यकुंभे तु पंचास्यं परितो हेतुकादिकम्
कुराडे वा स्थरिाडले वापि वटुकाग्निं प्रकल्पयेत् ६४
तन्मध्ये सिंहमावाह्य सांगं सन्तर्पयेत्ततः
समिदाज्येन चरुणा शतमष्टोत्तरेण च ६५
पूर्णमावाह्यमूलेन सर्वकामप्रपूरणीम्
संपूज्यगन्धपुष्पाद्यैः गुळान्नं तु निवेदयेत् ६६
घटस्थाप्य पटस्थाय सिंहसायनरूपिणे
प्रातस्संपूज्यगन्धाद्यैः पूर्णान्दत्वा समापयेत् ६७
शिलिकायां समारोप्य त्रिशूलेन समायुतम्
वटुकेन समायुक्तं ग्रामादींश्च प्रदक्षिणम् ६८
गत्वालयं प्रविश्याथ पूर्वोक्तेनैव वर्त्मना
स्थिरदराडस्य पुरतः स्थापयेद् ध्वजनायकम् ६९
पुरायाहं वाचयेदस्त्रतोयेन प्रोक्ष्य दराडकम्
धर्मादीन्कोणदेशे तु अधर्मादींश्चतुर्दिशि ७०
संपूज्य दराडमध्ये तु वटुकं संप्रपूजयेत्
रज्जुना सह सम्बध्वा पटं सिंहाधिपस्य च ७१
कुम्भान्मूलं समादाय सिंहनाथेतु योजयेत्
पुरतः स्थितकुंभांश्च पूर्वादीनभिषेचयेत् ७२
सिंहमंत्रं हृदि ध्यात्वा ध्वजमारोपयेद्गुरु
शुद्धनृत्तसमायुक्तं धूपदीपसमन्वितम् ७३
सर्वातोद्यसमायुक्तं मंगळांकुरशोभितम्
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात् ७४
सिंहस्थस्थापनं ++++++
यन्त्रस्थापनकं वक्ष्ये महादेवि प्रकाशितम् ७५
अष्टारं च महापद्मं षोडशारं ततोपरि
पुनः षोडशपत्रं च द्वात्रिंशञ्च ततोपरि ७६
मध्यमे कर्णिकायां तु लक्ष्मीबीजं ततोद्धरेत्
मायाबीजं ततो लिख्य कामराजमनन्तरम् ७७

प्रणवेन समावेष्ट्य सास्यं पालय पालय
प्रणवस्य तु मध्ये तु लिखित्वा तदनन्तरम् ७८
पश्चात्पद्माष्टपत्रेषु वटुकायद्वयमालिखेत्
वाग्भवं तुम्बुरुं चैव मूलमंत्रसमन्वितम् ७९
द्विरुच्चार्य वर्जयित्वा षोडशारं तु विन्यसेत्
पुनः षोडशपात्रेषु कलाः षोडश विन्यसेत् ८०
अकारादिक्षकारान्तं द्वात्रिंशद्यदळे न्यसेत्
एवं यंत्र समालिख्य भूर्जपत्रादि कोधवा ८१
स्वर्णकर्षप्रमाणेन चतुरंगुलविस्तृतम्
चतुरश्रं समापाद्य लिखित्वा यन्त्रमुत्तमम् ८२
कृत्वा तु गुळिका कारं प्राणस्थापनपूर्वकम्
आवाह्य देवं तत्रैव कुम्भे संस्थाप्य यन्त्रकम् ८३
दशावरणसंयुक्तं पूजयित्वा विचक्षणः
होमं मूलेन संपाद्य शुक्रवारे विशेषतः ८४
गुळिकां धारयित्वा तु कुंभाद्भिरभिषेचयेत्
धारणा मंत्रसिद्धिः स्यात् धारणाज्ज्ञानमाप्नुयात् ८५
भूतप्रेतपिशाचाद्या क्षुद्रकर्मादयस्तथा
विन्द्रवन्ति विशेषेण तत्क्षणादिह हृदि व्रते ८६
अथ स्नानविधिं वक्ष्ये साधकानां हिताय वै
स्नानं चतुर्विधं प्रोक्तं वारिभस्माणुमानसैः ८७
ब्राह्मे मुहूर्ते चोत्थाय हृत्पद्मे वटुकेश्वरम्
प्रणवात्मकनिष्कम्प दीपिकाकारमव्ययम् ८८
ध्यायन्प्रभाते विमले दण्डपाणिस्सहायवान्
ग्रामबाह्ये तु विजने नदीतीरविवर्जिते ८९
मार्गोद्यानानिहीने च कुर्यादवश्यकं स्थले
दिवासंध्याद्वये सौम्यवक्त्रो कण्ठस्तु रुद्रकाः ९०
रात्रौ दक्षिणवक्त्रस्तु शिरः कृत्वावगुण्ठनम्
नासाग्र उक्तदृष्टिस्तु मलमूत्रादिकं त्यजेत् ९१
तृणदृट्याथ मृखण्डैः मलं गुदगतं हरेत्

गोष्ठगोमयपाषाण हस्ताद्यैः परिवर्जयेत् ९२
वामहस्तेन जननं सवस्त्रं ग्राह्य दक्षिणे
हस्ते श्रद्धामृदग्राह्य वन्मिकादिविवर्जितम् ९३
जलतीरं प्रविश्याथ जननं द्वेकशोधनम्
गुदं पंचदशाहस्तं वामं दशविशोधयेत् ९४
द्वौ हस्तौ पंचधाशोध्य पादौ पाणी च चैकधा
यावत्तु भावसंशुद्धिस्तावच्छौचं समाचरेत् ९५
सोपवीतिरमंत्रं वै समाश्रित्यान्यदेशके
दन्तकाष्ठं समादाय हरेद्दन्तगतं मलम् ९६
हस्तांगुलमुमुक्षूणां सुभुक्षूणां वितस्तिकम्
सान्द्रं सत्वक्षमश्वेतं ऋृजु शुद्धमपर्वकम् ९७
कनिष्ठागुलिनाहं तु कर्तव्यमुभयं नृणाम्
अर्जुनं नक्तमालं च मुमुक्षूणां तु खादिरम् ९८
भुक्तयेत्वमृजमस्वादिवर्जयेद्धव धात्रिकम्
शिमू श्येष्ठादकैरण्ड काशांगुलिकुशादिकम् ९९
नद्यां समुद्रकायां वै चोत्तमं पुण्यतीर्थके
मध्यमं पुष्करिण्यां तु दीर्घिकाद्यधमं भवेत् १००
कूपेधमाधमं विद्यात् स्नानं तद्वारि वारुणम्
अष्टांगुलमधः खात्वा चास्त्रमंत्रेण चोद्धरेत् १०१
अस्त्रमंत्रेण सर्वांगं क्षाळयेदुदकाननः
हस्ताभ्यामास्य दृङ्नासा श्रोत्रादीनि विधाय च १०२
वटुकास्त्रं हृदि ध्यात्वा निर्मज्यार्कद्विर्तिं हरेत्
गृहस्थश्चेत्पुरा ब्रह्मीं संध्यां वन्देतसाधकाम् १०३
शैवीं कुर्यात्तदन्ते तु गणजात्यस्त्रसंधिकम्
नाभिदघ्नजले स्थित्वा शिष्टं ग्राह्य मृदं करे १०४
कृत्वा भागत्रयं द्वेकं मूलमंत्रेण मंत्रयेत्
पंच ब्रह्मेण चैकं तु चास्त्रमंत्रेण चैककम् १०५
मूलजप्तं जले क्षिप्त्वा शिवतीर्थं प्रकल्पयेत्
ब्रह्मजप्तं शिरो देशं सर्वांगं चास्त्रजप्तकम् १०६

समालिप्य हृदि ध्यात्वा ह्यापदुद्धारणं शिवम्
स्नायादुदङ्मुखो भूत्वा सर्वदोषप्रशान्तये १०७
सोमसूर्यौ करे ध्यात्वा मुद्रया घटसंज्ञया
मूलमंत्रादिकैर्मंत्रैः स्वकैः कार्यः शनैः शनैः १०८
जलतीरं समाश्रित्य स्नानचारिशरीरगम्
नववस्त्रद्वयं धृत्वा शुक्लयज्ञोपवीतकम् १०९
कुक्कुटासनसु स्थित्वा कृत्वा गोकर्णवत्करम्
फेनबुद्बुदहीनेन माषमग्नजलेन च ११०
देवी प्रणवयुक्तेन चात्मतत्वं स्वधेति च
विद्या तत्वस्व+श्चेति शिवतत्वस्वधेति च १११
आचमेत्तत्वशुध्यर्थं ओष्ठावंगुलिमूलतः
मार्जयेदस्त्रमंत्रेण हृदयेनैव मंत्रतः ११२
चक्षुर्नासाश्रुतिर्बाहू नाभिश्शिरसि संस्पृशेत्
एवं वारुणमाख्यातं भस्मस्नानं ततः शृणु ११३
प्रातः कालेन्दुनः स्नानं पश्चादाग्नेयमभ्यसेत्
संध्यान्तरेषु सर्वेषु चाग्नेयं वासमभ्यसेत् ११४
यावद्गंगाजलं शुद्धं तावद्भस्मापिवाचनम्
पापौघनाशनं भस्मस्नानं वश्यकरं नृणाम् ११५
आपदुद्धारणसैव सद्यमां निध्यकारणम्
पिशाचभूतयक्षादिब्रह्मराक्षसबाधिताः ११६
भस्मेन वटुकेशस्य स्वस्था भवति निश्चयम्
शुद्धं भस्म समादाय वटुकेशस्य मंत्रतः ११७
मस्तकादिपदान्तं चोद्धूळयेत्पापशुद्धये
पुनश्चापि समादाय भस्म तस्येतरे करे ११८
स्थापयित्वा जलेनैव मूलमंत्रेण सेचयेत्
मस्तकाळिककण्ठं च भुजकार्परकौ तथा ११९
मणिबन्धो च हृदयं जठरं नाभिपार्श्वकौ
जानुद्वयमिति ख्यातं सन्धयः षोडश क्रमात् १२०
त्रिपुण्ड्रं विधिना कार्यं विप्राणां च षडंगुलम्

नृपाणां चतुरंगुल्यं शूद्राणां चैकमंगुलम् १२१
स्त्रीणां तु तिलकं वापि पताकाकारमेव च
धारयेत्पापसंशुद्धभस्मस्नानं दिने दिने १२२
मूर्धादिपादपर्यन्तं पंचब्रह्मेण धारयेत्
सर्वांगं सद्यमंत्रेण धारयेन्मन्त्रसिद्धये १२३
मूलमंत्रं समुच्चार्य मंत्रस्नानं ततो भवेत्
मनसा वटुकं ध्यात्वा मानसं स्नानमेव हि १२४
एवं स्नानविधिश्चोक्तं सकळीकरणं शृणु
अस्त्रेण शोध्यौ हस्तौ द्वौ शक्तिमंत्रेण सुव्रते १२५
अंगुष्ठौ करमध्ये तु न्यस्त्वा वै ब्रह्मपंचकम्
अंगुष्ठादि कनिष्ठान्तं न्यस्त्वा करतलद्वयम् १२६
विद्यादेहेन मंत्रेण परमीकरणं कुरु
तर्जन्यानामिकामध्यमंगुलैः करमध्यमे १२७
नेत्रं विन्यस्य देवेशीमूर्त तत्रैव विन्यसेत्
कनिष्ठिकादिचांगुष्ठपर्यन्तं हृदयादिकैः १२८
न्यस्त्वाकरतले चास्त्र मूलेन चरमीकुरु
वर्मेण चावगुण्ठ्याथ पुनश्च परमी कुरु १२९
करन्यासं समाख्यातं अंगन्यासं ततः शृणु
वटुकस्यासनं चैव मूर्तिं हृदि च विन्यसेत् १३०
विद्यादेहं हृदिन्यस्त्वा नेत्रं नेत्रेषु विन्यसेत्
मूलमंत्रं समावाह्य पुनरंगानि कल्पयेत् १३१
हृदये हृदयं न्यस्य शिरः शिरसि विन्यसेत्
शिखायां च शिखां न्यस्त्वा कवचं स्तनमध्यमे १३२
अस्त्रं करतले न्यस्य दिशाबन्धं तु कारयेत्
कवचेनावगुण्ठ्याय मूलमंत्रेण मंत्रवित् १३३
महामुद्रां प्रदृश्याथ सकळीकरणं कुरु
प्राणानायम्य मूलेन संध्यां वन्देत साधकाः १३४
प्रातर्मध्याह्नसायाह्ने ब्राह्मीं च वैष्णवी तथा
रौद्रीं ध्यायेत् साक्षिणीं लोकसाक्षिणीम् १३५

तत्प्रभामण्डले स्थित्वा ततः कर्माणि साधयेत्
मालामंत्रं ततो जप्त्वा मूलमंत्रं ततो जपेत् १३६
अभ्युक्ष्य हृदयेनैव वामहस्ते जलं क्षिपेत्
स्रुवत्कलं शिरो देशे मूलांगं ब्रह्ममन्त्रकैः १३७
संप्रोक्ष्य दक्षिणे हस्ते शेषं निक्षिप्य तज्जलम्
आहृत्य पूरकेणैव दक्षनासापुटेन तु १३८
दक्षनासासमीपस्थ दक्षहस्तं तु सोदकम्
तज्ज्योत्स्नयाचनिर्गन्धं पापं देहोऽसितप्रभम् १३९
रेचकं दक्षनासा तु निर्गन्धं परिचिन्तयेत्
तद्देहस्तस्थ +++ जलक्षेपान्महास्त्रतः १४०
कृत्वैवं मार्जनाद्यं तु ततस्तर्पणमारभेत्
देवादीनां ऋषीणां च पितृणां मनुजादिनाम् १४१
भूतादीनां यथायोग्यं तत्तन्मंत्रैश्च तर्पयेत्
सिद्धानां गृहसंघानां एवं तर्पणमारभेत् १४२
पुनर्वटुकगायत्र्या कृत्वा वै तर्पणद्वयम्
तत्प्रमाणं जपं कृत्वा वटुकेशस्य मूलकम् १४३
विंशत्यंशे तु जपात् तर्पयेन्मंत्रसत्तमः
असिगंगादिदेवानामेकैकमर्पणं कुरु १४४
मालामंत्रादिमंत्राणां तर्पयेन्मंत्रसिद्धये
एवं तु तर्पणं कृत्वा जलादुत्तीर्य मंत्रवित् १४५
विघ्नात्रेन्यमार्गस्था भस्त्रामकविमानकम् १४६
इति पूर्वसहस्रे क्रियापादे बेरयात्राविधिर्द्विचत्वारिंशत्पटलः ४८

## आस्थानमण्टपस्थापनविधिः

आस्थानमण्टपैर्युक्तं स्थापनं परमेश्वर
वारुणे वज्रदेशे तु ळिबिळीति यथोक्तवत् १
चतुरश्र समोपेतं चतुष्कोण समन्तथा
सहस्रधारे लिंगे तु तत्र नादा कृतिर्भवेत् २
स्वयंभु देविके चैव रुद्रमूर्तिन्तथैव च

गाणवं बाणलिंगेषु चतुष्षष्टिसमन्वितम् ३
अार्षे च मानुषे चैव द्वात्रिंशत् षोडशेवहि
कृष्णन्दृषणदसंगृह्यं चतुस्थाश्शालस्य मध्यमम् ४
रुद्रहस्तन्तदुस्तेथं स्तंभलक्षणमुच्यते
पञ्चांग लक्षणोपेतं स्तंभसंख्यैस्समव्ययम् ५
तत्र मध्ये प्रतिष्ठाप्य स्थपतिर्लक्षणैर्युतम्
पञ्चाग्नि वेदिकोपेतं विन्यसेल्लक्षणैर्युतम् ६
वेदिका मध्यमे देवीं विन्यसेद्धृदयेन तु
श्रीदेवीं गौरवर्णाञ्च द्विनेत्रां शान्तलोचनाम् ७
पञ्चाग्निं पञ्चवक्त्रेषु होमयेत्तु प्रथक तैः
पूर्णाहुतिं क्षिपेत्पश्चात् अग्निन्तु कमलं क्षिपेत् ८
तत्पात्रे पञ्च रत्नानि विन्यसेत्तु विचक्षणैः
पूर ++ ञ्च समोपेतं दर्पणोदरसन्निभम् ९
पञ्चांगवेदिकोपेतं समलक्षणमेव च
शर्करैर्गुळसारं च सेचयेत्प्रथमे दिने १०
स्थापने स्तंभसंयुक्तं उत्तरे विन्यसेत्तथा
उप ++ यासमाच्छाद्य बन्धयेत्सुदृढीकृतिम् ११
दर्भमाला समायुक्तञ्चतुस्तोरणभूषितम्
वितानध्वजसंयुक्तं मगळां कूर संयुतम् १२
चूतपूगस्तथाचैव इक्षुदण्ड प्रतिष्ठितम्
मुक्तादामैरलंकृत्य चूतपल्लवसंयुतम् १३
सहस्रदळसंयुक्तां सहस्रेण चतुर्दळम्
साहस्रदण्डमूले तु सहस्रगडुकं न्यसेत् १४
दर्भकूर्चसुपुष्पाद्यैः यत्र तत्र न्यसेत् घटैः
पुण्याहप्रोक्षणं कृत्वा पञ्चशान्तिसमुद्धृतम् १५
पर्यग्नि करणं कृत्वा पुनः पुण्याहमाचरेत्
शुद्धशैवविधिस्नात्वा पञ्चांगभूषणैर्युतम् १६
गंधाक्षतसुपुष्पाद्यैः देशिकालंकृतस्य च
सामान्यार्घ्यं प्रकल्प्याथ प्रोक्षयेदस्त्रवारिणा १७

सुखासीनश्चासनाद्यौ शिवोहं भावना युतः
मन्त्रन्यास विधिं सम्यग्विन्यसेद्धृदयेन तु १८
पत्रकार्पासकञ्चैव रक्तपुष्पाक्षतादिषु
रक्तचन्दनवस्त्राट्यै स्थापयेद्दक्षिणे दिशि १९
वामभागे नसेद्दीपं गव्यपञ्चामृतैस्सह
त्रिपाद्यूर्ध्वे न्यसेत्स्थालीं हेमसूची द्वयन्तथा २०
पुण्याहप्रोक्षणं चैव स्तंभमुन्मीलनस्य च
पञ्चहस्तततोपेतं विद्या तत्वं त्रिहस्तकम् २१
शिवं गुणाकरोपेतं देवस्याभिमुखस्य तु
करपादन्यसत्पादं शिवांश कटि बन्धनम् २२
नाभिकुक्षौ हृदे चैव शूलविद्याधिदैवतम्
चन्द्रहस्तगळोपेतं तदूर्ध्वे चन्द्रमण्डलम् २३
तदूर्ध्वे चन्द्रहस्तैश्च शिरो देश समन्वितम्
चन्द्रमण्डलमध्ये तु शिवांशन्तु त्र्यंबकैः २४
नीत्रोन्मीलनं कृत्वा सर्वतः स्तंभमेव च
दर्पणं विन्यसेत्पूर्वे अधिवासं जलान्वितम् २५
गव्यपञ्चामृतं स्नात्वा त्रिपादेन त्रिनाडिका
तत्र मध्ये हुनेत्पश्चात् सहस्राक्षरमेव च २६
सहस्राक्षरमन्त्रेण सहस्रशीर्ष वस्त्रकम्
सहस्रधारा सुवक्त्रेण सहस्रस्तंभमेवतम् २७
मूर्ति मूर्ति समोपेतं मूर्ति मूर्ती स्वरान्वितम्
द्वात्रिंशत्प्रतिमाह्ये तु स्तंभदेवे सदेव हि २८
षोडशं षोडशे शक्त मूर्तिस्तंभसुमूर्तिषु
अर्चयेद्गंधपुष्पाद्यैः पूर्वोक्तविधिना सह २९
स्तंभमूर्तिं घटे स्नाप्य हृदये हृदयन्यसेत्
स्तंभदेवेषु सर्वत्र वस्त्रेणाच्छादनेषु च ३०
पुष्पदामैस्सुगंधाद्यैरक्षतैः बिल्वपत्रकैः
अर्चयेद्धूपदीपाद्यैः पूर्ववच्च विशेषतः ३१
एकवक्त्रं त्रिणेत्रञ्च चक्रपाशं वराभयम्

नीलं श्वेतं सुरक्ताभं श्यामं विद्रुममेव च ३२
पञ्च भूतानि वर्णैस्तु भावयेद्दराडसर्वहि
नैवेद्यं तु हविः प्रोक्तं तांबूलन्तु पृथक्पृथक् ३३
धूपदीपञ्च सर्वेषां स्वस्वनाम्नैः प्रपूजयेत्
चन्द्रसूर्याग्निशक्त्ये तु तत्र मध्ये तु वेदिकाम् ३४
उत्सवेश्वरसर्वेषां स्थापयेदुत्सवान्तकम्
नीराजनसमोपेतं राजोपकरणक्रियाम् ३५
आस्थानमराटपैर्युक्तं शिवशक्तिसुनिश्चितम्
मराटपं शक्ति जाले तु महेशन्तु सदाशिवम् ३६
शिवं द्विजं प्रधाने तु मन्त्रतन्त्रं विशेषतः
देशिको दक्षिणे मूर्ति स्थपतिस्वा यथा बलम् ३७
आस्थान मराटपं प्रोक्तं ब्रह्मविष्णुशिवात्मकः ३८
इति पूर्वे सहस्रे क्रियापादे आस्थानमराटपस्थापनविधिपटलः

## यन्त्रस्थापनविधिः

यन्त्रशुद्धिविधिं वक्ष्ये श्रुणुष्वेवं जनार्दन
तुराडरूपञ्च सर्वेषां स्थापयेत् वक्षते श्रुणु १
ऋृक्षभन्नागभूतेषु हंस राक्षसमेव च
शिबिके वायि संयुक्तं निर्मितं वर्णभिस्सह २
अंकुरारापर्पयेत्पूर्वं नयनोन्मीलनन्तथा
मराटपं पञ्चहस्तेन एकाग्निं वा विशेषतः ३
एकाग्निं योनिकुराडेषु अलंकृत्य सुशालये
आस्थानमराटपेरुक्तं अन्यथा वजयेत् गृहेत् ४
पुरायाह प्रोक्षणं कर्मा शान्तितराडुलनिर्मितम्
दळाष्टकसमायुक्तं दर्भैः पुष्पैः परिस्तरेत् ५
सौम्य दक्षिण तन्मध्ये त्रिकुंभं विन्यसेद्बुदा
कलशाष्टसमोपेतं दर्भकूर्चोपविष्टरम् ६
रक्तवस्त्रञ्च पुष्पाद्यैः अर्चयेद्धूपदीपकैः
सामानार्घ्यं प्रकल्प्यञ्च यागवास्तु हुनेत् शतम् ७

पर्यग्निकरणं वेदिका दक्षिणे दिशि
पुनरर्घ्यं प्रविश्यञ्च मध्यमं मध्यकुंभके ८
शिवतत्वं समभ्यर्च्य आत्मविद्यञ्च युग्मके
अभ्यर्च्य गंधपुष्पाद्यैः ब्रह्मविष्णुहराधिपाः ९
नैवेद्यं धूपदीपञ्च होमकर्म समाचरेत्
अग्निकार्योक्तमार्गेण होमयेत् कुंभयोजिषु १०
प्रणवादि स्वनाम्ने च आत्मविद्या शिवान्तकम्
प्रोक्ष्यमभ्यर्च्य गंधाद्यैः पञ्चगव्येन संयुतम् ११
दर्पणे खड्गसुस्नाप्य पूजयेत् बिंबवत्सदा
गव्यपञ्चामृतोपेतं स्नपनं पञ्चनाडिका १२
पश्चात्तद्धोमयेत् किन्तु जानुकर्ण शिरोवधि
संयोज्य धूपदीपञ्च षट्त्रिंशत् तत्वसंयुतम् १३
अजपेन सहोपेतं हंसरूपमनुन्तथा
सर्वत्र तत्वविद्यान्तं विन्यसेन्मूलमन्त्रवत् १४
ओं नमो भूतरूपाय मायाबीजेन संयुतम्
धरणी बीजमादाय गजमूर्तिं नमः पदम् १५
हंस वाजि सहंसञ्च उत्तरेत्तामभिस्सह
भकारं वृषभाये च बिन्दुवादसमन्तकम् १६
प्रायश्चित्ताहुतिं कृत्वा बिन्दुनादन्नमोन्तकम्
शंखदुन्दुभिनिर्घोषैः स्तोत्रमंगलवाचकैः १७
तत्र कुंभं समभ्यर्च्य पूर्ववदभिषेचयेत्
मन्त्रन्यासविधिं कृत्वा पृथ्वी पादञ्च विन्यसेत् १८
अप्तत्वं सर्वदेहेषु वह्निवायुनभोर्ध्वकम्
++ येद्देशिको धीरो अपूपादि समन्वितम् १९
मुद्गमाष कुलुत्थञ्च शिंबमाडकमेव च
इक्षुसारेण दण्डञ्च अनेकव्यंजनैर्युतम् २०
धूपदीपं हृदा दत्वा तदूर्ध्वे वामहेशकम्
चन्द्रमौलिरलंकृत्य यन्त्रोर्ध्वे विन्यसेच्छिवम् २१
प्रासादप्रदक्षिणं कृत्वा स्नापनप्रणवं शिवम्

उत्सवे ध्वजमारोप्य यन्त्रतन्त्रविधीयते २२
यन्त्रोर्ध्वे देवमारोप्य सर्वमंगळकारणम्
रक्षणामभयं युद्धौ जयार्धेन समन्वितम् २३
राजराष्ट्रविवृध्यन्ते तुण्डयन्त्रमिति स्थितम्
तुण्डलिंगेन सर्वत्र तुण्डवाहनतुण्डकम् २४
कञ्चुकं शिरपादान्तं विन्यसेत्तु विचक्षणैः
प्रतिसंवत्सरं कृत्वा प्रोक्षयेदात्मवत्त्रयम् २५
इति त्र्यं प +++ ददेशिशैकन्तु दशाहुतिः
शुध्यर्थं पूर्ववत् भ्राम्यमित्युक्तं वत्सरं प्रति २६
यन्त्रस्थापनकाले च परिवेष ++ भवम्
शान्तिहोमं हुनेत्पश्चात् आचार्याय प्रदापयेत् २७

इति सहस्रतन्त्रे क्रियापादे यंत्रस्थापनविधिपटलः

## वीरेशस्थापनविधिः

अथातः संप्रवक्ष्यामि वीरेशस्थापनं परम्
शत्रुघ्नं भूतवेताळ ब्रह्मविष्णु शिरोभ १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
मारवमार्गयुते मासे वर्जयेद्देशिकोत्तमः २
भौमादित्य श ++ चतुर्थी नाम संयुतम्
षष्टी नवम्य वर्जन्ते चतुर्दशी सहमेव च ३
स्थिरो भयात्मलग्नञ्च दृष्टि नक्षत्र संयुतम्
अंकुरार्पण पूर्वञ्च नयनोन्मीलनन्तथा ४
जलाधिवासमेवोक्तं रक्षाबंधनकर्मणि
मन्त्रं न्यासञ्च होमेन जीवनासञ्च न्यस्तयुक् ५
कुंभा +++ नैवेद्यं प्रतिष्ठायां विधीयते
मृषत्कृष्ण करीन्यस्य निर्मितं शरभाकृतिम् ६
श्वेतवर्णं चतुर्बाहुं जटामकुटमण्डितम्
++++ टंककटे युग्मं वल्लकी नाद घोषणैः ७
शार्दूल चर्मवसनं मुक्तारूपं विशेषतः

श्यामवर्णं चतुर्बाहुं खड्गखेटक धारिणम्  ८
प्राजापत्य ऋषिस्सर्वे अक्षिलेखनमेव च
अक्षमालां दधानञ्च मुण्डमाला विभूषितम्  ९
अन्यत्र बाहुपञ्चाद्वा त्रिंशल्लक्षणैर्युतम्
नेत्रयुग्मयुते ऋक्षे नेत्रोन्मीलनमाचरेत्  १०
जयमन्त्रं समुच्चार्य घृतेनैव मधुस्तथा
नदीतीरे तटाके वा सप्तरात्रिं तथैव च  ११
सप्त नाडी जले स्थाप्य उद्धृते भ्रमणेऽपि च
यागमण्टपमासाद्य षोडशद्वादशेकरम्  १२
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
मंगळाष्टपताकस्यात् मध्ये वेदिं प्रकल्प्य च  १३
नवाग्निं चैव पञ्चाग्निं दर्पणोदरसन्निभम्
धनुरश्रे प्रधानञ्च कल्पयेद्देशिकोत्तमः  १४
अलंकृत्य विशेषेण संस्कार्य्यञ्च चतुर्दश
प्रोक्षणं पञ्चगव्येन पर्यग्निञ्च हुनेत् शतम्  १५
पाशुपतेन समभ्यर्च्य भ्रामयेत्तु विचक्षणैः
अंकुरार्पणपूर्वन्तु बेरशोधनमेव च  १६
पूर्वादीशानपर्यन्तं कर्करी युग्मभिस्सह
वेदिकोर्ध्वे न्यसेद्व्रीहि तण्डुलैस्तिललाजकैः  १७
दळाष्टकसमोपेतं दर्भैः पुष्पैः परिस्तरेत्
तदूर्ध्वे विन्यसेत्कुंभं पूर्वपश्चिममुत्तमम्  १८
दक्षिणे दिशि तद्भागे तन्मध्ये कर्करी सह
षट्कुंभ विन्यसेत्सूत्र वस्त्रकूर्च समन्वितम्  १९
अभिधानञ्च रत्नेषु नाळिकेरञ्च पत्रवत्
शुद्धशैवेन कर्तव्यं अनुक्तमन्यथान्वितम्  २०
स्नानकर्मणि संप्राप्ते तर्पणञ्च विशेषतः
शान्तिभूत बलञ्चैव आरोग्यमर्चयेत् सुधीः  २१
विंशत्कुंभार्चनं कृत्वा दिव्यदृष्टिनिपाततः
वारुणादि निर्ऋत्यन्तं पश्चिमद्वारमादिषु च  २२

वारुणादि राक्षसान्तञ्च असितांगादिभिस्सह
ब्रह्मविष्णु ससूरञ्च ऐशान्यां गुरुपादुकम् २३
पूर्वे वा दक्षिणे वापि पश्चिमे चोत्तरेऽपि वा
युग्मायुग्मं न्यसेद्विद्वां चतुष्कोणे चतुष्टयम् २४
पूर्वद्वारे चये कुंभे इन्द्रादीन् भैरवाष्टकम्
गणपतिं क्षेत्रपालञ्च दुर्गां च वटुकन्तथा २५
अभ्यर्च्य गंधपुष्पाद्यैः धूपदीपं त्रिधान्वितम्
वेदिका दक्षिणे भागे भूतशुध्यन्तरीयताम् २६
विशेषार्घ्यं समभ्यर्च्य वेदिको रसनादिभिः
तदूर्ध्वे दशकुंभेषु शान्त्यतीतादि तत्पतीन् २७
पूर्वे वा कुंभमभ्यर्च्य पुरुषं कुंकुम प्रभम्
दक्षिणे घोरमभ्यर्च्य उत्तरे वामकेश्वरम् २८
सद्येन पश्चिमे कुंभं अर्चयेद्धूपदीपकैः
पञ्चमुद्राः प्रदृश्यन्ते मध्यपाताळधोमुखम् २९
तन्मुखं वीरभद्रेशं दशबाहुं किरीटकम्
प्रळयसंस्काररुद्रश्च प्रळयसंस्कारमन्त्रवित् ३०
आदिवृत्ताक्षरं प्रोक्तं मन्त्रेणैव समर्चितम्
संहारवीररुद्रेशं विश्वतश्चक्षुमेव च ३१
विश्वतो बाहुसंभूतं ध्याययेत् विश्वमूर्तिषु
अभ्यर्च्य गंधपुष्पाद्यैः संहितामनुमर्चितम् ३२
आदिप्रासादमन्त्रेण अर्चयेद्धूपदीपकैः
नैवेद्यञ्च गुळां नस्य दधिक्षीरञ्च शुद्धितम् ३३
होमयेत्पञ्चशुद्धिञ्च होमयेत्तु सहस्रकम्
प्रत्येकं शतसहस्रं आहुतिञ्च पृथक्पृथक् ३४
समिधो सद्य मन्त्रेण चरुं वामेन होमयेत्
घृतं वै घोरमन्त्रेण क्षीरमीशान संयुतम् ३५
औषधी द्रव्यसंयुक्तं पुरुषेणैव होमयेत्
सर्वद्रव्येण संयुक्तं पातालं वसवाहुतिः ३६
धूपदीपं तथा दत्वा तत्पूर्वे शालितण्डुलैः

तदूर्ध्वे प्राक्शिरोर्ध्वे क +++++ ३७
पञ्चकंबळतन्मध्ये शान्तिकुंभेन निद्रयुक्
+++ त्कुंभञ्च त्रिधास्थाप्य आत्मविद्या शिवान्तकम् ३८
अभ्यर्च्य गंधपुष्पाद्यैः नासकर्मसमाचरेत्
प्रतिसरं बंधयेत् कृत्वा पीठरूपमुदाहृतम् ३९
धूपदीपं परिभ्राम्य नासकर्म विशेषतः
आत्मविद्याशिवान्तञ्च षट्त्रिंशत् तत्वसंयुतम् ४०
अष्टत्रिंशत्त्रिखण्डाध्वा श्रीकण्ठादि समन्वितम्
मातृकान्यासमेवोक्तं अन्तर्बहिष्षडध्वयुक् ४१
पञ्च ब्रह्मकलैर्युक्तं क्ष्मावानिदहनानिला
खण्डेन्दुमूर्तिभूतञ्च अष्टपक्षे न्यसेत्तथा ४२
क्ष्मावह्नियजमानार्क जलवायुनिशाकराः
व्योमान्तमूर्तयश्चाष्टौ न्यस्तव्या प्रतिखण्डके ४३
शर्वः पशुपतिः चोग्र रुद्रश्चैव भवस्तथा
ईशानश्च महादेवो भीमश्चेत्यष्टमूर्तिपाः ४४
किन्तु तत्वत्रयं न्यासो जानुकण्ठशिरोवधि
होमयेत्पूर्ववत्कृत्वा रात्रौ निद्रां विवर्जयेत् ४५
प्रभाते विधिवस्नात्वा जपानुष्ठानतर्पणैः
पूर्ववत्पूजयेत्कुंभे होमयेत्पूर्ववक्षिपेत् ४६
बलिहोमं सर्वेषां तद्वेरस्थापनं विधिः
पिण्डके शक्तिमभ्यर्च्य कर्णिकान्तमनूर्चयेत् ४७
पञ्चरत्नेन वा तस्मिन् स्वर्णं वाथ यधौषधीः
सुमुहूर्ते सुलग्ने च स्थापनं पिण्डकान्वितम् ४८
पुण्याहप्रोक्षणं कृत्वा गर्भगृहमलंकृतैः
स्थापयेत्पञ्चबंधैश्च होमयेत्तु यथा हुतिः ४९
पूर्वस्याभिमुखं देवं पश्चिमे चोत्तरेऽपि वा
पूर्ववद्यागदेवेषु अभ्यर्च्य गंधपुष्पकैः ५०
नैवेद्यं धूपदीपञ्च होमकर्म तु पूर्ववत्
मन्त्रं न्यासविधिं पूर्वं विन्यसेद्भावनान्वितम् ५१

जीवन्यासं शिखराडाध्वा सन्निरोप्य चतुष्टयम्
तैलस्नानादिगव्येषु स्नापयेत् चरभेश्वरम् ५२
धौतवस्त्रेण चोन्मृज्य स्नपनं पञ्चविंशतिः
होमयेत् शान्ति तद्युत्तं धूपदीपञ्च पूर्वशः ५३
यागदेवानिसृज्यान्तमूर्तिकुंभषडध्वनि
तत्स्थाने वेदिका कुंभे सर्वघोषैरलंकृतम् ५४
प्रासादस्य प्रदक्षिणयां सर्वघोषैरलंकृतम्
तत्तत्स्थाने कुंभञ्च तत्तन्मूर्तिषु सेचयेत् ५५
प्रधानकुंभमुद्धृत्य हृदये हृदयं न्यसेत्
शुद्धवस्त्रेण च उन्मृज्य रक्तचन्दन निर्मितैः ५६
वस्त्राभरणमाल्यैश्च अर्चयेद्वीरसंहिताम्
असितांगानिलोकेशानर्चयेद्धूपदीपकैः ५७
महाहविर्निवेद्यञ्च मुखवाससमन्वितम्
भैरवानसितांगादि लोकपालादिभिः सह ५८
बहिर्बलिस्वनाम्नेवक्षिपेच्छैवस्य ब्रह्मकम्
ब्राह्मणान् भोजयेद्दव्यात् गोभूहिरण्य दानकान् ५९
आचार्यं मन्त्रसंयुक्तं तद्रूपं स्वर्ण बिंबवत्
वस्त्रहेमांगुलीयुक्तं दापयेत्तु जनार्दन ६०
सामीप्यपदमाप्नोति पुनश्शत्रू विनश्यति
राजराष्ट्रश्च तुष्टिश्च संतुष्टिस्साधकप्रभो ६१
स्थापनं वीरभद्रस्य वीरभद्रोत्सवं श्रुणु ६२
इति सहस्रतन्त्रे क्रियापादे वीरेशस्थापनविधिपटलः

## अष्टबन्धविधिः

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये १
वशळवहळयुक्ते सौम्यषष्टार्णपद्मे त्वरुणतरुणगात्रं वारणाहं गणेशम् ।
अभयवरदहस्तं चारुपाशाङ्कुशोद्यत्करयुगळनमन्यं चिन्तयेद्विश्वमूर्तिम् २
वागर्थाविव संपृक्तौ वागर्थप्रतिपन्नये

जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ३

अथातस्संप्रवक्ष्यामि ह्यष्टबन्धविधिक्रमम्
सर्वपापहरं पुण्यं सर्वसिद्धिकरं शुभम् १
राजराष्ट्रविवृद्ध्यर्थं सर्वलोकशुभाप्रदम्
सर्वदोषनिवृत्त्यर्थं अष्टबन्धनमाचरेत् २
अष्टबन्धं यथाहीनं राजा दूर्जयमाप्नुयात्
यक्षराक्षसपैशाचलोकपीडा प्रजायते ३
अष्टबन्धनहीने तु पूजा नैवेद्यमेव च
बलिनित्योत्सवञ्चैव नमस्कारप्रदक्षिणम् ४
नृत्तगीतञ्च वाद्यञ्च नित्यनैमित्तिकन्तथा
उपचाराणि सर्वाणि निष्फलन्तु विधीयते ५
पूर्वे तु कलहं विद्यात् आग्नेय्यामग्निदाहकम्
याम्ये तु व्याधिपीडा च नैर्ऋत्यां ग्रामनाशनम् ६
वारुण्यां वर्षनाशं स्याद्वायव्यां सस्यनाशनम्
भौमे तु अर्थनाशं स्याद् ऐशान्यां पुत्रनाशनम् ७
परतो बन्धहीने तु सर्वत्र नाशकरं भवेत्
शक्तिस्थानेषु निर्माल्यं शैववर्गं विनश्यति ८
विष्णुभागे तु निर्माल्यं नृपवर्गं विनश्यति
ब्रह्मभागे तु निर्माल्यं ब्रह्मवर्गं विनश्यति ९
नन्द्यावर्तशिलाभागे विट्छूद्रादि विनश्यति
कूर्मस्थाने तु निर्माल्यं सर्वनाशकरं भवेत् १०
तस्मात्सर्वप्रयत्नेन अष्टबन्धनमाचरेत्
वित्तं शिवान्तकं कृत्वा शिवमाराधयेन्नरः ११
भक्त्या वित्तानुसारेण प्रकुर्यादष्टबन्धनम्
कल्पयेद्विधिना तुल्यं फलमाढ्यदरिद्रयोः १२
वित्तशाठ्येन यः कुर्याद्द्रव्येणाढ्योऽपि मानवः
न च तत्फलमवाप्नोति लोभेनाक्रान्तमानसः १३
स्वस्य द्रव्यन्त्रिधा भज्य जीवनायैकमादिशेत्

भागद्वयञ्च धर्मार्थं यतो नित्यं च जीवति १४
धर्मद्रव्यं स्वर्णपात्रे स्थापयित्वा शिवाय च
सहिरण्यं प्रदातव्यं प्रीतिपूर्वं शिवार्पितम् १५
भक्त्या त्वत्वन्तया युक्ता राजानो वा स्वकैर्धनैः
शिवधर्मा प्रकुर्वन्तु तत्र शाढ्ये न ते जनाः १६
न कुर्वन्तश्च वित्तस्य वित्तशाठ्यन्तु दोषकृत्
अल्पवित्तं दरिद्राञ्च याचयित्वा धनं बहु १७
शिवधर्मान् प्रकुर्वन्तु वित्तशाठ्यं न कारयेत्
याचकाप्तधनाश्चैव फलमश्नन्ति भूयशः १८
येन केनाप्युपायेन धनं सञ्चय्य मानवाः
संग्राहेत् कर्तृधर्मिष्ठा शिवधर्माञ्चिरन्तनान् १९
शिवधर्मान् समुद्दिश्य याचयित्वा धनं बहु
दुर्लभं मानुषं जन्म शिवधर्मोऽपि दुर्लभः २०
बहुजन्मकृतं पुण्याज्जीवोऽप्युभयभाग्भवेत्
येन केनाप्युपायेन शिवधर्मान् चरन्ति ये २१
इष्टान् भोगान् परं प्राप्य महीयन्ते जनाः परैः
शिवलोके शिवेनेव सह वा सञ्चरन्ति ते २२
शिवधर्मान् समुद्दिश्य प्रतिगृह्णन्ति ये जनाः
धनन्ददति ये लोके आप्नुयास्तामुभावपि २३
दृष्टसिद्धिञ्च सामीप्यन्नात्र कार्या विचारणा
शिवधर्मं समुद्दिश्य याचका धनदास्तथा २४
प्रेरका मोदकाश्चैव कर्तारो कारकास्तथा
आप्नुयास्तु परन्ते ते शिवसामीप्यमञ्जसा २५
शिवधर्मं समुद्दिश्य समार्ज्जवधनं जनः
स्वर्णपात्रे स्थापयित्वा द्रव्यशुद्धिं समाचरेत् २६
मन्त्रेण च शतं जप्त्वा होमयेद्देशिकोत्तमः
तेन द्रव्यस्य शुद्धिः स्यात् शुद्धद्रव्यं शिवाय च २७
निवेद्य गुरवे पश्चात् शिवधर्मं समाचरेत्
अथातः संप्रवक्ष्यामि अष्टबन्धविधिक्रमम् २८

अष्टबन्धं यथाहीनं राजा दुर्जयमाप्नुयात्
उपचाराणि सर्वाणि निष्फलानि विधीयते २९
तस्मात्सर्वप्रयत्नेनाष्टबन्धनमाचरेत्
प्रथमं सद्योबन्धं स्यात् क्रमाद्बन्धं द्वितीयकम् ३०
परीतो बन्धहीनं च तृतीयं बन्धनक्रमात्
यवाद्यंगुष्ठविच्छिन्ने सद्योबन्धनमाचरेत् ३१
नित्यस्वपनवेलायां शिवाग्रे स्थण्डिलं कुरु ३२
तदूर्ध्वे कलशान् स्थाप्य स्नपनोक्तं प्रपूजयेत्
घटाग्रे होमकार्याणि हुत्वा तु विधिवद्बुधः ३३
सन्धानमष्टबन्धेन कृत्वा गव्याभिषेचनम्
कलशैरभिषेकञ्च क्षीरभाराभिषेचनम् ३४
नैवेद्यं दापयेच्छम्भोस्सद्यबन्धनमुच्यते
द्वादशाङ्गुलविच्छिन्ने क्रमाद्बन्धनमाचरेत् ३५
तोरणं कुण्डवेदिञ्च यागशालां प्रकल्पयेत्
लिङ्गमूर्तिं समादाय कुम्भे संयोजयेत्क्रमात् ३६
यागपूजाप्रकारेण पूजाहोमं समाप्य च
पूर्ववद्यजनं कृत्वा रात्रौ शेषं समाप्य च ३७
अभिषेकं प्रभाते च क्रमात् बन्धं समाचरेत्
परितोबन्धविच्छिन्ने नन्द्यावर्तविहीनके ३८
लिङ्गस्स्याद्वारथाते च लिङ्गे चलनसंयुते
तद्राष्ट्रनाशनं प्रोक्तं नृपतेर्भयमुद्भवेत् ३९
तस्मात्सर्वप्रयत्नेन पुनस्सन्धानमाचरेत्
अथ बन्धक्रियास्सर्वा कथ्यन्ते क्रमशोऽधुना ४०
सप्ताहमुत्तमं प्रोक्तं नवाहा मध्यमा भवेत्
पञ्चाहं अधमं ज्ञेयं अथवा त्र्यहं भवेत्
दैविवे दिव्यलिङ्गे वा श्रेष्ठं सप्ताहमुच्यते
आर्षलिङ्गेषु पञ्चाहं नवाहं गाणनं भवेत्
राक्षसे मानुषे चैव विशेषमधुनोच्यते
मानुषाणां तु लिङ्गानां मन्त्रकार्यघटस्थितिः

नवाहं चाथ पक्षाहं मासान्तं चेत् घटस्थितिः ४२
तदूर्ध्वे कुम्भसंस्था चेद्देवेश सर्वदोषकृत्
तस्मात्सर्वप्रयत्नेन मासान्तं वाथ पूर्वकम् ४३
कुम्भस्थं योजयेत् लिङ्गं अभिषेकमथाचरेत्
अङ्कुराहं समारभ्य त्रिपञ्चनवसप्तके ४४
यागं कुर्याद्विशेषेण तद्विधानमिहोच्यते
द्विकालञ्च त्रयाहे तु षट्कालन्दिनपञ्चके ४५
सायं प्रातः क्रमेणैव दिनमेकं प्रशस्यते
अङ्कुरादिप्रतिष्ठान्तं दिनसंख्या प्रकीर्तितः ४६
सद्योऽधिवासनाञ्चापि एकाहे दिविहोमयेत्
सर्वमासेषु कर्तव्यं अष्टबन्धनकर्म च ४७
तिथिवारमुहूर्तादीन् वर्जयेत्तु विचक्षणः
अष्टबन्धं त्रिबन्धञ्च पञ्चबन्धनमेव च ४८
लिङ्गपीठान्तरे चैव प्रतिमाशान्तथैव च
बन्धयेत्तु विधानेनाऽष्टबन्धञ्च त्रिबन्धनम् ४९
सृष्टिस्थितिञ्च संहारं कारयेत्तु विचक्षणः
बन्धनञ्चाष्टबन्धं स्याच्छ्रीकरं पञ्चबन्धनम् ५०
मोक्षञ्चैव त्रिबन्धं स्यात् बन्धयेत्तु विधानतः
काषायं शर्कराचूर्णं रक्ततूलं च गव्यकम् ५१
लाक्षं चूर्णं मधूच्छिष्टं गुग्गुलुं कुन्दनिष्ककम्
त्रिभागं शर्कराचूर्णं गुग्गुलू च द्विभागकम् ५२
लाक्षाचूर्णं भागमेकं काषायञ्च त्रिपादकम्
मधूच्छिष्टं त्रिपादञ्च तथा वै रक्तदूलकम् ५३
नवनीतत्रिपादञ्च हिङ्गुलं पादमुच्यते
हिङ्गुलं हितकाले तु बन्धनं बलहीनकम् ५४
एतद्द्रव्यञ्च प्रस्थेन भागं कुर्याद्यथाक्रमम्
करेण मर्दयित्वा तु बन्धयेद्देशिकोत्तमः ५५
अथवान्यप्रकारेण कर्तव्यो बन्धनक्रमः
गुग्गुलञ्च पलं नाडीशर्करं बाणमेव च ५६

पलमेकन्तु काषायं लाक्षार्धपलमुच्यते
मधूच्छिष्टं तदर्धन्तु तदर्धं हिङ्गुलं तथा ५७
तस्यार्धं तूलमेवन्तु नवनीतेन मिश्रितम्
तुलायां पलमात्रेण हस्ता संमिश्र मर्दयेत् ५८
अष्टबन्धनमेवोक्तं पञ्चबन्धमतः परम्
लाक्षा शर्करपाषाणं माहिषं कुन्दनिष्ककम् ५९
मधूच्छिष्टसमायुक्तं पञ्चबन्धनमुच्यते
शर्करा नवनीतञ्च कुन्दनिष्कं त्रिबन्धनम् ६०
स्वयंभौ देशिके बाणे बन्धयेच्च त्रिबन्धनम्
दीप्ये च गाणवे चैव आर्षके पञ्चबन्धनम् ६१
मानुषे राक्षसे चैव प्रतिमायाञ्च पीठके
परिवारादि सर्वेषु बन्धयेच्छिष्टबन्धनम् ६२
स्वर्णेन रजितेनैव सीसेनैव तु बन्धयेत्
अपक्वं पक्वमेवन्तु द्विविधं बन्धनक्रमः ६३
पक्वन्तु पाकयोग्यं स्याद् अपक्वं मर्दनं भवेत्
पक्वापक्वपदं ज्ञात्वा बन्धयेत् सुदृढं बुधः ६४
अपक्वं दैविके प्रोक्तं पक्वञ्चैव तु मानुषम्
अपक्वं बन्धनं प्रोक्तं सुपक्वं मधुनोच्यते ६५
ततोऽष्टबन्धनं कुर्यात् तैलञ्च दधिगैरिकम्
गुग्गुलं सिकतं तिक्तं सजरं सजलं क्षकान् ६६
व्योमपक्षाग्नि ऋक् बाणरसमन्यत्र तांकितम्
तैला प्रोक्तं क्रमाभागां पाकं चिक्कणवत् भवेत् ६७
शङ्खचूणान् तिलञ्चैव त्रिबलं कुन्दनिष्ककम्
कदली दधि लाक्षा च गुग्गुलू पक्वबन्धनम् ६८
निवेद्यञ्च गुरुं पश्चात् शिवधर्मान् समाचरेत्
शिवसांकल्पितद्रव्यं एकाशतविभोजितम् ६९
भागत्रयञ्च यागार्थं एकभागोऽभिषेचयेत्
ऋत्विग्भ्योस्त्वेकभागं स्याद् आचार्याय तथैव च ७०
विप्राणां भोजनार्थाय भागद्वितयमेव हि

तथा भागद्वयं ज्ञेयं जपदानार्थकं भवेत् ७१
त्रिपक्षयजनार्थाय अवशिष्टं समाचरेत्
यागार्थं मण्टपं कुर्यात् हर्म्ये ग्रे वाथ पार्श्वयोः ७२
ऐशान्यां पावके पाशौ अथवा चान्यदेशके
अथवा संकटस्थाने योग्यरूपेण कल्पयेत् ७३
भूमिं संशोध्य जान्वन्तं समीकृत्योपलिप्य च
मुष्टिमात्रं समुत्सेधं दर्पणोदरसन्निभम् ७४
शिवयज्ञे विशेषेण पञ्चहस्तप्रमाणतः
एकहस्तं तु विस्तारमुन्नतं वसुसंख्यया
भित्तिञ्च परितः कृत्वा शिला चैष्टिकया क्रमात् ७५
चतुरश्रं ततः कृत्वा पदविन्यासमाचरेत्
पूर्वाग्रं रविसूत्रं स्यादुदगग्रं तथैव च ७६
एकविंशाधिकशतं पदभागस्समीरितः
मध्ये चैकपद ब्राह्मे प्रधानं वर्धनीं तथा ७७
दैविकेषु पदे कुम्भान् पैशाचं षोडशं भवेत्
पूजार्थं च चतुर्दिक्षु विदिक्षु स्तम्भमुच्यते ७८
शिष्टमष्टपदे चैव अष्टमङ्गळमीरितम्
षट्पञ्चाशत्पदे बाह्ये राक्षसे घटतोरणः ७९
आचार्यशिष्यसञ्चारं योग्यं शिष्टं पदं भवेत्
स्तम्भस्थानं पदे बाह्ये इत्येवं पदसंस्थितिः ८०
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव च
मण्टपं वा चतुष्कं वा शालां वापि प्रकल्पयेत् ८१
मण्टपस्य तु तन्मध्ये पदे नन्दे तु वेदिका
विस्तारार्धं समुत्सेधं चतुरश्रं समन्ततः ८२
द्वादशाङ्गुलमुत्सेधं षडङ्गुलसुविस्तरः
मुकुरोदरसंकाशं उपवेदिञ्च कारयेत् ८३
कुण्डानि परितः कुर्यान्मानुषेषु पदे हितः
युगाश्रं योनिशशिभृत् त्र्यश्रं बाणाश्रमेव च ८४
षडश्रं पदमष्टाश्रं ऐन्द्रादिषु प्रकल्पयेत्

रुद्राखराडलयोर्मध्ये मूलपीठकृतिर्यथा ८५
तथा कुराडाकृतिः प्रोक्ता प्रधानं कुराडमुच्यते
पञ्चाग्न्यायतने कुराडं विदिक्षुः परिवर्जयेत् ८६
एकाग्न्यायतने कुराडं वेद्या पश्चिमतो न्यसेत्
इन्द्रादिनवकुराडन्तु अष्टभोगादिसिद्धिदः ८७
पञ्चकुराडफलं प्रोक्तमभीष्टसिद्धिदायकम्
श्रीकरमेककुराडञ्च गोमयेनोपलेपयेत् ८८
पुरायाहं वाचयेत्तत्र ब्राह्मणान् भोजयेत्ततः
पश्चादुच्छिष्टमुद्वास्य पुनः पुरायाहमाचरेत् ८९
अङ्कुरान् पूर्वदिवसे आचार्यो ऋत्विग्भिस्सह
वपनं देहशुद्ध्यर्थमाचरेत्तु यथाक्रमम् ९०
अधिवासदिनान् पूर्वे नित्यपूजावसानके
विघ्नेशं मूलबेरञ्च संपूज्य च विशेषतः ९१
उत्तराभिमुखो भूत्वा तत्रादौ गणनायकम्
ध्यात्वा संकल्पयेद्धीमान् विधिवद्देशिकोत्तमः ९२
धूपदीपादिना पूज्यं ताम्बूलं नाळिकेरकम्
नैवेद्यं मूर्त्तिपैस्सार्धं अनुज्ञां कारयेद्गुरुः ९३
विघ्नानपोहयात्राशु प्रसीद गणनायक
प्रार्थ्यैवं शुभनक्षत्रे सुदिने चरलग्नके ९४
मूललिङ्गं समासाद्य उत्तराभिमुखस्थितः
प्राणायामं पुरा कृत्वा संकल्पञ्च ततः परम् ९५
अष्टपुष्पैस्समभ्यर्च्य ताम्बूलादि निवेदयेत्
शिव सर्वजगन्नाथ सदाशिव नमोऽस्तु ते ९६
अष्टबन्धविधानार्थमनुज्ञां देहि मे प्रभो
तथास्त्विति शिवेनोक्तं लब्ध्वानुज्ञां शिवाज्ञया ९७
देव्याधिबन्धविच्छिन्ने तदन्तिकमनुव्रजेत्
अनुज्ञां कारयेद्विद्वान् मृत्संग्रहणमारभेत् ९८
एतान् देवान् पुरस्कृत्य सर्ववाद्यसमन्वितः
उत्तमं प्रागुदीची स्यान्मध्यमं दक्षिणं स्मृतम् ९९

पश्चिममधमं प्रोक्तं निव्रजेद्देशिकोत्तमः
नदीतीरे बिल्वमूले तटाके तुलसीवने १००
केदारे दर्भमूले च वल्मीके नन्दने वने
अश्वत्थमूले देशे वा गत्वाचार्यो विधानतः १०१
शुद्धदेशमनुप्राप्य पुण्याहं वाचयेद्गुरुः
शालिभिस्तण्डुलैश्चैव कल्पयेत्स्थण्डिलं तिलैः १०२
तन्मध्ये षड्दलं न्यस्य स्थापयेत्सप्तकुम्भकान्
कूर्चपल्लवसंमिश्रान् सरक्तसलिलान्वितान् १०३
मध्याद्दलाग्रकुम्भेषु पूजयेत्सप्तवारिधीन्
अथवा एककुम्भे तु विन्यसेत्सप्तवारिधीन् १०४
नैवेद्यं धूपदीपादीन् कल्पयेत्तु विशेषतः
नवकोष्ठान् समालिख्य कुम्भाग्रे स्थण्डिलोपरि १०५
मध्ये ब्रह्मणमभ्यर्च्य अनन्तादि जयान्तकम्
पूर्वादिकोष्ठमध्ये तु इन्द्रादीनर्चयेद्बुधः १०६
पूजयित्वा यथान्यायं स्वाहान्ते बलिमाचरेत्
बलिमण्डल्पूर्वे तु भूमिदेवीं समर्चयेत् १०७
खनित्रं पूजयेत्तत्र प्राङ्मुखो वाप्युदङ्मुखः
प्राक् शिरोर्ध्वाननान्देवीं चित्राकारां विचिन्तयेत् १०८
कुक्षिदेशे मृदं शुद्धं मस्तके राष्ट्रनाशनम्
पार्श्वयो राज्यनाशञ्च पादे कर्ता विनश्यति १०९
गले तु स्थापके नाशः कट्यां स्थपति नश्यति
परितो ग्रामनाशश्च मृदं कुक्षौ तु संग्रहेत् ११०
खनित्रेण त्रिधा खात्वा मृदं संगृह्य पात्रके
वाहयित्वा यथोक्तेन वस्त्रेणाच्छादयेद्बुधः १११
भूमिदेव्याः कुक्षिदेशे खातदोषनिवृत्तये
व्रणोपशमनार्थाय सेचयेत्सप्तवारिधीन् ११२
परिचारकमाहूय शिबिकायां गजेऽपि वा
वाहयित्वा मृदं पश्चान्नृत्तगीतसमन्वितः ११३
ग्रामप्रदक्षिणं कृत्वा प्रासादं प्रविशेद्गुरुः

सूर्यास्तादुत्तरे काले पञ्चनाड्यां सुलग्नके ११४
अथवा सप्तनाड्यन्ते कारयेदङ्कुरार्पणम्
अनङ्कुरन्तु यत्कर्म तत्कर्म निष्फलं भवेत् ११५
अङ्कुरादङ्कुरन्नास्ति कृतञ्चेत्कर्मनाशनम्
एकालये च द्वौ यागौ वपनं वास्तुशान्तिकम् ११६
एकत्रैव प्रकर्तव्यं उत्सवादौ विनाचरेत्
प्रासादस्योत्तरे देशे दक्षिणे वाग्रदेशके ११७
ऐशान्यां यागशालायां वायव्यां वाचयेद्गुरुः
स्थण्डिलं शालिभिः कुर्यात् पदविन्याससंयुतम् ११८
प्राङ्मुखं पञ्चसूत्राणि उदङ्मुखन्तथैव च
मध्ये चतुष्पदं कृत्वा सोमकुम्भं प्रपूजयेत् ११९
कल्पयित्वासनध्यानैर्मूलेनावाह्य पूजयेत्
नैवेद्यधूपदीपादीन् दत्वा तद्बहिपालिकान् १२०
पालिका घटिका चेति शरावास्तु क्रमाद्गुरुः
ईशानादि समभ्यर्च्य प्रत्येकं युगसंख्यया १२१
ब्रह्मा विष्णुश्च रुद्रश्च पालिकाद्याधिदेवताः
क्रमेण द्वादशादित्यान् प्राकारादिषु पूजयेत् १२२
तिलसर्षपमुद्गानि माषशिम्बाढकानि च
कुलुत्थं यवगोधूमं नवबीजानि संग्रहेत् १२३
जलेन क्षालयेद्द्रव्यं क्षीरसे केन वापयेत्
चन्द्रकुम्भस्थतोयेन सेचयेत् पालिकादिकान् १२४
कुम्भे चलासनं पूज्य पूर्वोक्तविधिना सह
गुलखण्डञ्च ताम्बूलं पायसादीन् निवेदयेत् १२५
धूपदीपोपचारैश्च प्रणम्य प्रार्थयेद्गुरुः
जपं समर्प्य विधिवत् पश्चात्सूत्रधारिणम् १२६
उत्सवे च चतुर्विंशत् पवित्रे षोडश स्मृतः
संप्रोक्षणाद्यष्टबन्धेषु पालिका द्वादश स्मृताः
व्रतादिनियमार्थाय रक्षसूत्रस्य धारणम्
ताम्बूलं भस्मसंयुक्तं तण्डुलं नाळिकेरकम्

स्वर्णादिनिर्मितं सूत्रं अष्टनागान् प्रपूजयेत् १२७
उत्तमं होममाख्यातं मध्यमं होमवर्जितम्
होमकुम्भं विना यत्र सूत्रधारं तु कन्यसम् १२८
निर्दिष्टदिवसात्पूर्वे रात्रौ कौतुकबन्धनम्
अभावात्तद्दिने वापि क्रियापूर्वेऽथवा सुधीः १२९
तत्कर्ममात्रसिद्ध्यर्थं आचार्यो सूत्रमाधरेत्
अहन्यहनि संपूज्य निर्दिष्टदिवसादधि १३०
निर्दिष्टदिवसे प्राप्ते सोममुद्वासयेत्सुधीः
अङ्कुरांश्च जले क्षिप्त्वा कौतुकञ्च विसर्जयेत्
पालिका घटिका चेति शरावस्तु क्रमात् गुरुः १३१-१
ईशानादि समारभ्य प्रत्येकं युगसंख्यया
ब्रह्मा विष्णुश्च रुद्रश्च पालिका चाधिदेवता १३१-२
क्रमेण द्वादशादित्यान् पालिकादिषु पूजयेत्
तिलसर्षपमुद्गानि माषशिंसादकानि च १३१-३
कुलुत्थं यवगोधूमनवबीजानि संग्रहेत्
जलेन क्षाळितं द्रव्यं क्षीरसेचेन वापयेत् १३१-४
दिशां पतीति मन्त्रञ्च या जाता इति मन्त्रतः
अभिमन्त्र्य ततश्शक्तिं संपूज्य वापयेच्छुभान् १३१-५
चन्द्रकुम्भस्थतोयेन सेचयेत् पालिकादिकान्
कुम्भे च चासनं पूज्य पूर्वोक्तविधिना गुरुः १३१-६
गूळखण्डञ्च ताम्बूलं पायसादि निवेदयेत्
धूपदीपोपचारैश्च प्रार्थयेद्देशिकोत्तमः १३१-७
कौतुकाङ्कुरमेवोक्तं वास्तुदेवान् समर्चयेत् १३१
यागस्य मण्टपे मध्ये बलिपीठाग्रकेऽपि वा
ब्रह्मस्थाने मण्टपादौ वास्तुयागं समाचरेत् १३२
नवहस्तसमायुक्तं वेदिकुण्डसमन्वितम्
चतुर्द्वारसमायुक्तं मण्टपं कारयेत्ततः १३३
एकाशीतिपदे मध्ये वेद्यां ब्रह्मादिकान्यसेत्
पूर्वस्मिन्नग्निकुण्डन्तु पुण्याहं पावके दिशि १३४

धर्मराजगुरुस्थानं नैर्ऋत्यां पञ्चगव्यकम्
पर्यग्निकरणं पाशौ वायौ यागोपसाधनम्  १३५
उत्तरे ब्रह्मकुम्भस्य स्यादैशान्यामस्त्रराजकम्
ब्रह्माणं प्राङ्मुखोऽभ्यर्च्य घटे च मण्डले यजेत्  १३६
तदग्रे वह्निकार्यं तु वह्निमभिमुखाननम्
रात्रौ कुर्याद्बलिं विद्वान् आदिग्रामादिवास्तुषु  १३७
रात्रौ वाथ दिवा वापि देवदेव्यालयादिषु
मण्डूकं देवतानाञ्च वास्तूनाञ्च शिवं भवेत्  १३८
देवीनामन्यशक्तीनां शुभं परमशायिकम्
विघ्नसङ्घन्निहन्त्याशु इष्टकाम्यार्थसिद्धिदम्  १३९
तत्कर्म मन्त्रसिद्ध्यर्थं वास्तुयागं समाचरेत्
वास्तुयागं न कुर्याच्चेत् कर्त्ता राष्ट्रविनाशनम्  १४०
तस्मात्सर्वप्रयत्नेन वास्तुयागं समाचरेत्
वेदिमध्ये विशेषेण तण्डुलैश्च तिलैरपि  १४१
मण्डूकपदमित्युक्तं पूर्वन्तद्वदमे प्रभो
प्रागग्रान्नव सूत्राणि उदगग्रान्तथैव च  १४२
चतुष्षष्टिपदं कुर्यात्कर्णसूत्रसमन्वितम्
शतुश्शूलञ्चतुर्वृत्तं रज्वष्टकविभूषितम्  १४३
मर्मद्वादशकोपेतं मण्डूकं परिकल्पयेत्
पुण्याहोदकसेकञ्च पञ्चगव्येन सेचनम्  १४४
कुर्वीत मण्डपाद्येषु यथोक्तविधिना गुरुः
मध्ये चतुष्पदे ब्रह्मा चतुर्दिक्षु यथाक्रमम्  १४५
षट्षट्पदानि संमृज्य समर्यादीन्यथाक्रमम्
आपो आपवत्सञ्च उक्तस्थाने प्रपूजयेत्  १४६
ईशादिकोणकार्धार्धा पदानां भोगिनः क्रमात्
बहिर्विधि चतुष्कोणेष्वर्धैकपदभोगिनः  १४७
अन्ये त्वेकैकमेकञ्च शूलवृत्तन्तथैव च
तत्र स्थितास्त्रिपञ्चाशद्देवतावाहनं क्रमात्  १४८
गण्डपुष्पैस्समभ्यर्च्य ताम्बूलादि निवेदयेत्

सूत्रमध्ये बलिं विद्वान् त्रयोदशपदे क्षिपेत् १४९
पदमध्ये बलिं कुर्याद्द्वात्रिंशन्मूर्तिसंख्यया
विकारार्धपदैश्चैव बलिमष्टौ समाचरेत् १५०
त्रिपञ्चाशद्बलिं दद्याद्यथोक्तविधिना गुरुः
दध्याज्यगुळसंमिश्रं शाल्यन्नं ब्रह्मणे बलिः १५१
समर्यादिचतुर्णान्तु पायसं बलिरुच्यते
विदिक्ष्वापादिदेवानामष्टानां कृसरं बलिः १५२
ईशाद्यावृतदेवानां मुद्गान्नं बलिरुच्यते
अष्टानां बाह्यदेवानां माषान्नं बलिरुच्यते १५३
अभावे माषसंमिश्रं बल्यन्नं समुदाहृतम्
एवं संपूजयेत्पश्चात्कलशान्स्थापयेद्गुरुः १५४
उत्तरे पश्चिमे वापि वृत्तवत्स्थण्डिलं कुरु
स्नपनोक्तप्रकारेण वास्तुकुम्भान् प्रपूजयेत् १५५
मध्ये ब्रह्माणमभ्यर्च्य वास्तुदेवान् समर्चयेत्
भारतीं तस्य वामे तु पूर्वादिकलशान्न्यसेत् १५६
त्रैमयश्चैव त्रैमूर्तिं पद्माक्षं पद्मयोनिकम्
चतुर्मुखं च दातारं पितामहमजं तथा १५७
मूर्तयोऽष्टौ समभ्यर्च्यास्त्वथवा लोकपालकान्
गन्धपुष्पैस्समभ्यर्च्य नैवेद्यादि प्रपूजयेत् १५८
समध्यैकपदे तत्र होमस्थानं विधीयते
कुण्डं वा स्थण्डिलं वापि अग्निकार्योक्तमाचरेत् १५९
वास्तुब्रह्मादिदेवादीनग्निमध्ये प्रपूजयेत्
पूर्वमाज्याहुतिं हुत्वा अष्टाविंशच्छताधिकम् १६०
समिल्लाजादि द्रव्यादीन् दशाङ्गं होमयेत्क्रमात्
द्रव्यान्ते व्याहृतिं हुत्वा पश्चाद्देवान् हुनेत्क्रमात् १६१
समर्याकादिदेवानां हुत्वा चैव दशांशकम्
आपादीन्नामधाष्टानामष्टौ प्रत्येकमाहुतिः १६२
ईशानप्रमुखादीनि प्रत्येकं पञ्च पञ्च च
चरुमेवाष्टदेवानां होमं कुर्यात्त्रयाहुतिः १६३

तत्तद्देवं चरुं हुत्वा शरल्यै द्रव्यमाहुनेत्
हुनेत्प्रतिनिधिद्रव्यैः कूष्माण्डादिभिरेव च १६४
मांसाभावे तथा कुर्याद्देशिको बीजवर्जितः
कूष्माण्डं खड्गमन्त्रेण भित्वा हुत्वा स्रुवेण तु १६५
पूर्णाहुतिं ततो हुत्वा धूपदीपं समाचरेत्
अग्निस्थञ्च पदे योज्य पदस्थं कुम्भके यजेत् १६६
कुम्भस्थं हृदये योज्य पर्यग्निकरणं मतम्
पर्यग्निशुद्धिमाख्यातं सर्वदोषौघदाहकम् १६७
कुम्भोदकेन वीथ्याञ्च शुद्ध्यर्थं प्रोक्षयेद्गुरुः
तज्जलेनैव शुद्धिः स्याद्धोमकर्मविवर्धनम् १६८
पलाशशुष्कदर्भाद्यैर्मुष्टिं कृत्वा दृढं पुनः
संप्रोक्ष्य हृदयेनैव संप्रज्वाल्य तदग्निना १६९
यागधामादिशुद्ध्यर्थं पर्यग्निकरणं कुरु
पञ्चगव्येन संप्रोक्ष्य वर्धनीतोयसंयुतम् १७०
सर्वातोद्यसमायुक्तमस्त्रदेवसमन्वितम्
एवं प्रदक्षिणं कृत्वा उल्कां बाह्ये त्यजेद्बुधः १७१
पुण्याहं वाचयेद्विद्वान् सर्वत्र प्रोक्षयेद्गुरुः
प्रभाते विमले धीमान् विधिवत्स्नानमाचरेत् १७२
वस्त्रैराभरणैर्भूष्य नित्यकर्म समापयेत्
आरभेच्छिवपूजाञ्च प्रसन्नाख्यां विधानतः १७३
शिव प्रसन्नपूजार्थस्नपनोक्तं समाचरेत्
प्रायश्चित्तं पुरा कृत्वा होमसंख्या हुनेत्क्रमात् १७४
गर्भगृहं प्रविश्याथ पूजयेत्तु यथाविधि
नैवेद्यधूपदीपादीनुपचारान् समाप्य च १७५
प्रसन्नयजनञ्चार्थं कृत्वालकरणाय च
यागशालां विशेषेण कृत्वालंकरणादिकम् १७६
चतुर्दिक्षु चतुर्द्वारं चतुस्तोरणभूषितम्
अष्टदिक्षु ध्वजानष्टौ लम्बयेत्तु प्रदक्षिणम् १७७
पूर्वे नीलांशुकं प्रोक्तमाग्नेय्यां रक्तचेलकम्

दक्षिणे कृष्णचैलं स्याद्धूम्रचेलं तु नैर्ऋते १७८
शङ्खाभं वारुणे चेलं वायव्यां कम्बळन्तथा
उत्तरे काञ्चनं चेलमैशान्ये पीतवस्त्रकम् १७९
त्रयोदशाङ्गुलायामं विंशत्यङ्गुलदैर्घ्यकम्
विस्तारेण समं पुच्छं तदर्धं शिखरं भवेत् १८०
चतुः पुच्छं त्रिपुच्छं वा पुच्छद्वयमथापि वा
ध्वजमध्ये लिखेद्धीमान् दिग्गजञ्च विशेषतः १८१
नवहस्तञ्चाष्टहस्तं सप्तहस्तमथापि वा
शेषञ्च ध्वजवत्कुर्यान्नानावस्त्रैश्च कारयेत् १८२
पताकलक्षणं प्रोक्तं क्षुद्रध्वजविधिं शृणु
बाणाङ्गुलन्तु विस्तारं द्वादशाङ्गुलदैर्घिकम् १८३
वेत्रद्वयसमायुक्तमशेषं केतुवत्कुरु
क्षुद्रध्वजविधिं प्रोक्तं शिखरे पुच्छसंयुते १८४
तिथिहस्तयुतं वापि कर्किहस्तद्वयापि वा
रन्धुहस्तयुतं वापि चारीरज्जुसमायुतम् १८५
नानावर्णसमायुक्तं नानारूपसमायुतम्
एवं तरंगमाख्यातं स्तम्भवेष्टनमुच्यते १८६
कृष्णं श्वेतं पूर्वभागे श्वेतं रक्तं तु दक्षिणे
रक्तं पीतं पश्चिमे स्यात् पीतकृष्णमुदग्दिशि १८७
गात्रायामं समं वस्त्रं निच्छिद्रं तेन वेष्टयेत्
रक्तप□दुकूलाद्यैः कुर्यात्कार्पासजातिनम् १८८
षड्विंशद्धस्तदीर्घं स्यादष्टताळसुविस्तरम्
वितानं लम्बयेन्मध्ये यागवेश्मनि देशिकः १८९
रम्भाम्रनाळिकेरैश्च मुक्तादामसुपुष्पकैः
इक्षुप्रवालताम्बूललताभिश्च विभूषयेत् १९०
भूतवेदाग्निदर्भैर्वा व्योमहस्तं प्रलम्बयेत्
अन्तरं चतुरङ्गुल्यं चूतपल्लवशोभितम् १९१
अङ्गुष्ठपरिनाहं स्याद्दर्भमालाभिरावृतम्
गोमयेनोपलिप्याथ रङ्गवल्यादि कारयेत् १९२

नानादीपसमायुक्तमष्टमङ्गलसंयुतम्
दशायुधसमायुक्तं पुरयाहं प्रोक्षयेद्गुरुः १९३
स्थरिडलं शालिभिः कुर्याद्वेदिकोपरि मध्यमे
द्विशतैः पञ्चविंशत्या व्रीहिभिः पूरितं तु यत् १९४
शक्तिमात्रमिति ज्ञेयं मानन्तेनैव कारयेत्
शक्तिस्थलं प्रकुञ्चञ्च प्रसृतिः कुरडवन्तथा १९५
तथा स्यादञ्जलिः प्रस्थं पादञ्चाढकशैवकम्
द्रोणं खारि क्रमात्प्रोक्तं द्विगुणन्तु पृथक्पृथक् १९६
खारित्रयं तु भारं स्याद्भारादूर्ध्वं न मानकम्
शालिभिस्तेन मानेन तरडुलैरुडुसन्निभैः १९७
दशभारैश्च संपूर्य उत्तमन्तत्प्रकीर्तितम्
अष्टत्रिंशन्तु द्रोणं स्यान्मध्यमञ्चेति कीर्तितम् १९८
अधमं त्रिंशतिद्रोणैः कर्तव्यं देशिकेन तु
शाल्यार्धन्तरडुलञ्चैव तरडुलार्धन्तिलेन च १९९
तिलार्धं लाजमेवन्तु सप्तधान्यं शिवत्रयम्
आढकं मुद्गमाषञ्च गोधिसर्षपमेव च २००
गणनिष्पावकञ्चैव सप्तधान्यैः प्रपूरयेत्
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् २०१
द्वारादिपरिवाराणां द्रोणं द्रोणं प्रकीर्तितम्
तरडुलन्तु तिलञ्चैव तस्यार्धार्धं तथैव च २०२
द्रोणद्वयघटं शंभोः स्वर्णेनैव तु कारयेत्
सुदृढं रजितेनैव द्रोणपूर्णन्तु वर्धनीम् २०३
शिवपूर्णघटानष्टौ तामेनैव तु कारयेत्
आढकेनैव पूर्णाः स्युः कलशास्संप्रकीर्तिताः २०४
सर्वं ताम्रेण कर्तव्यं कांस्यं वा मृरामयं तु वा
कर्तुं वित्तानुसारेण लक्षणोक्तं प्रकल्पयेत् २०५
उत्तमं तिलमात्रेण मध्यमं यवमात्रकम्
अधमांगुलिमात्रेण अथवा गजनेत्रवत् २०६
एकसूत्रं भवेद्व्याधिः द्विसूत्रमभिचारके

त्रिसूत्रं सर्वसिद्धिः स्याद्वेष्टयेत्तु प्रदक्षिणम् २०७
आसूत्रैर्वेष्टयेत्कुम्भं वर्धनीञ्च द्विसूत्रकम्
कलशानेकसूत्राणि भाण्डेषु कलशेषु च २०८
विप्रस्य कन्यया सूत्रं कर्तितं श्लाघ्यमेव च
त्रिसूत्रमेकसूत्रं स्यात् तत्त्रिसूत्रं नवात्मकम् २०९
गवाक्षिसदृशं वेष्ट्य सद्योजातेति मन्त्रतः
क्षालनं वामदेवेन धूपितं घोरमन्त्रतः २१०
पुरुषेशानयोर्मन्त्री आयोमुखोर्धकं न्यसेत्
आपो वा इति मन्त्रेण वारि कुम्भेषु पूरयेत् २११
नादेयं वाथ कूपोयं शुचिना स्वच्छवारिणा
मृद्भाण्डे पूरयेत्तोयं शीतलेन सुगन्धिना २१२
स्नानद्रव्यं च संग्राह्य वस्त्रपूतेन पूरयेत्
गन्धं मृगमदञ्चैव कर्पूरं कुङ्कुमं तथा २१३
गोरोचना च कस्तूरी षड्गन्धञ्चेति कीर्तितम्
हिमसेचनसंमिश्रं कुम्भमध्ये सुपूरयेत् २१४
उत्तमं दशनिष्कं स्यान्मध्यमं तु तदर्धकम्
तदर्धमधमं ज्ञेयं प्रतिमां कारयेद्बुधः २१५
मनोन्मन्याश्च प्रतिमा तस्यार्धञ्चैव कारयेत्
विद्येश्वरघटानान्तु तस्यार्धं हेमप□कम् २१६
परिवारघटानान्तु तस्यार्धं हेमप□कम्
यादृशं प्रतिमाकारं तादृशं भाव्य बुद्धिमान् २१७
सदाशिवश्च गौर्याश्च विद्येशं बीजमालिखेत्
तत्तत्कुम्भस्य तन्मध्ये निक्षिपेद्देशिकोत्तमः २१८
श्रेष्ठं द्वादशनिष्कं स्यान्मध्यमञ्चाष्टनिष्ककम्
कन्यसं पञ्चनिष्कं स्यात् प्रधानस्य महोत्पलम् २१९
नीलोत्पलन्तु तस्यार्धं वर्धन्यां दापयेत्सुधीः
विद्येशानान्तु तस्यार्धं हेमशूलं विधीयते २२०
माणिक्यमिन्द्रनीलञ्च वज्रं मरकतन्तथा
वैडूर्यं स्फटिकञ्चैव पद्मरागञ्च मौक्तिकम् २२१

प्रवाळं नवरत्नानि कुम्भमध्ये विनिक्षिपेत्
वज्रं वैडूर्यकञ्चैव इन्द्रनीलञ्च मौक्तिकम्  २२२
प्रवाळं पञ्चरत्नानि वर्धन्यां निक्षिपेत्क्रमात्
माणिक्यं स्फटिकं वज्र त्रिरत्नं कलशेष्वपि  २२३
स्वर्णयज्ञोपवीतञ्च पञ्चनिष्कं च कारयेत्
सप्तनिष्कन्तु सर्णेन रक्षसूत्रन्तु कारयेत्  २२४
कौतुकं शातकुम्भेन रजतं वाथ तन्तुना
लिङ्गनाहं समं कृत्वा सूत्रपीडञ्च तद्बहिः २२५
स्वल्पाधिकप्रमाणाढ्यनागराजं फणान्वितम्
तत्पुच्छसंयुतं सूत्रं प□ाकारसमन्तु वा  २२६
षट्त्रिंशद्दर्भसंख्यैश्च निर्मितं कूर्चमुत्तमम्
दक्षिणावर्तरूपेण ग्रन्थिं कुर्याद्द्व्याङ्गुलम्  २२७
अग्रं वेदाङ्गुलं प्रोक्तं नालमष्टादशाङ्गुलम्
कुम्भस्य जिह्वाग्रन्थ्यग्रं शिवकुम्भे विनिक्षिपेत्  २२८
चतुर्दशाङ्गुलं नाळं पञ्चविंशतिदर्भकैः
अग्रग्रन्थिञ्च पूर्वोक्तं वर्धन्यां कूर्चमीरितम्  २२९
पञ्चदशदलैर्दर्भैरग्रग्रन्थि त्रयाङ्गुलम्
त्रयोदशाङ्गुलन्नाळं प्रमाणन्तु समायुतम्  २३०
विद्येशकलशानान्तु कूर्चं क्षिप्त्वा यथाक्रमम्
ऊर्ध्वाग्रं पुष्टिदं प्रोक्तमधोग्रं शान्तिकं भवेत्  २३१
कुर्यात्कूर्चक्रमेणैव ग्रन्थिं वा मुखमाचरेत्
कुम्भस्य चूतपत्राणि पञ्चविंशति विन्यसेत्  २३२
वर्धन्याश्चूतपत्राणि पञ्चादशमिति स्मृतम्
कलशोच्छिष्टपत्राणि षोडशाङ्गुलमायुतम्  २३३
अथवा द्वादशाङ्गुल्यं साङ्गञ्चैव प्रकीर्तितम्
कुम्भकर्णसमं वृत्तं शरावाकृतिवत्कृतिम्  २३४
तन्मध्ये रन्ध्रसंयुक्तं विन्यसेत्सापिधानकम्
नाळिकेरन्तु कुम्भानामुत्तमाङ्गन्तु कथ्यते  २३५
डाडिमीफलमध्यं स्याच्चूतारम्भाधमं भवेत्

देवाम्म्रञ्च तथा प्रोक्तं यथालम्भं प्रकल्पयेत् २३६
नाळिकेरं फलं प्रोक्तं शिरः कुम्भस्य उच्यते
तन्मखं वक्त्रमेवन्तु मुखे पूजां प्रकल्पयेत् २३७
एकत्रिंशद्दळैः कूर्चं कृत्वा कुम्भे न्यसेद्बुधः
एकविंशति दर्भैश्च वर्धन्यां विन्यसेद्बुधः २३८
एकादशदळैः कुर्याद्ग्रन्थिरेकाङ्गुलं भवेत्
चतुरङ्गुलमानं हि तस्याग्रञ्चाभिशस्यते २३९
आग्रन्थि मूलमानं हि मूर्धादिपादमुच्यते
इत्येतल्लक्षणं प्रोक्तं लम्बकूर्चस्य धीमता २४०
उत्तमं रविहस्तं स्यान्मध्यमन्दशहस्तकम्
अधमञ्चाष्टहस्तं स्यात्पञ्चतालसुविस्तरम् २४१
वस्त्रद्वयेन संवेष्ट्य तत्समञ्च दुकूलकम्
पीतं वा सुदृढं सूक्ष्मं शिवकुम्भे सुयोजयेत् २४२
नवाष्टसप्तहस्तञ्च श्रेष्ठमध्यकनीयसम्
तद्वद्दुकूलरक्ताद्यै वर्धन्यां वेष्टयेद्गुरुः २४३
विद्येशकलशानान्तु षट्कहस्तं पृथक्पृथक्
कलशानान्तु सर्वेषां चतुर्हस्तं विधीयते २४४
त्रिंशद्धस्तञ्चोत्तमं स्यात् मध्यमं पञ्चविंशतिः
अधमं विंशति प्रोक्तं षट्तालुञ्च सुविस्तृतम् २४५
वेद्या प्रति समा वस्त्रं निश्छिद्रन्तेन वेष्टयेत्
रुद्राक्षिमुपवीतञ्च उष्णीषञ्चोत्तरीयकम् २४६
भस्मालयादि शैवानां पञ्चमुद्रा प्रकीर्तिताः
विभूतिवलयं धार्यं द्वात्रिंशत्कर्णदेशके २४७
अष्टोत्तरशतं प्रोक्तं रुद्राक्षमालयान्वितम्
अक्षसूत्रं प्रकर्तव्यं सप्तविंशतिभिः क्रमात् २४८
षट्सप्तपञ्चहस्तञ्च बाणभागैकविस्तृतम्
सुश्लक्ष्णं सुदृढं सूक्ष्मं पीतं रोमादिवर्जितम् २४९
निरस्तचिबुकेनैव कर्णाभ्यां चैव वेष्टयेत्
पुच्छं वै वामकर्णे तु वेष्टयेत्तु प्रदक्षिणम् २५०

वेष्टयेत्त्वेकमेवं तु शेषं शिरसि वेष्टयेत्
उष्णीषं लक्षणं प्रोक्तं वस्त्रलक्षणमुच्यते २५१
यजने स्तापने कालेऽग्निकार्योत्सवे तथा
उत्तमं रविहस्तं स्यान्मध्यमं नवहस्तकम् २५२
अधमञ्चाष्टहस्तं स्यात्पञ्चतालसुविस्तृतम्
एवं वस्त्रद्वयं प्रोक्तमाचार्यो धारयेत्क्रमात् २५३
पीतं क्षौमञ्च रक्तं स्यादलाभेऽन्यं परिग्रहेत्
अग्निदग्धं सकेशञ्च मूषिकाग्रन्थिकन्तथा २५४
पुरातनञ्च जीर्णञ्च वस्त्रं पञ्च विवर्जयेत्
दग्धन्तु राष्ट्रनाशं स्यान्मूषिकाघ्नं भयाय च २५५
सकेशं रोगजनकं जीर्णन्तु धननाशनम्
पुरातनञ्च वस्त्रञ्च यजमानं विनाशयेत् २५६
तस्माद्दोषं परित्यज्य दापयेन्नववस्त्रकम्
वस्त्रलक्षणमेवन्तु उत्तरीयं ततः परम् २५७
बाणहस्तायतं वापि वेदहस्तायतन्तु वा
तालमात्रप्रविस्तारं बन्धयित्वा द्विपुच्छकम् २५८
यज्ञोपवीतवद्धार्यमुत्तरीयं विशेषतः
दुकूलमुत्तमं प्रोक्तं वृक्षसूत्रन्तु मध्यमम् २५९
अधमं तन्तुना कार्यं त्रिविधा योगप□िका
तृतीय्याङ्गुलविस्तारं तन्मानमुपवीतकम् २६०
दशाङ्गुलसमं दैर्घ्यं पञ्चाङ्गुलसुविस्तृतम्
दुकूलद्वयसंयुक्तं गोलकाकृतिवत्कृतिम् २६१
सितभस्मसमायुक्तमाचार्याय प्रदापयेत्
हेमाङ्गुलीयकटकौ कटिसूत्रञ्च कुण्डलौ २६२
हेमयज्ञोपवीतञ्च पञ्चाङ्गिभूषणं स्मृतम्
पवित्रं पञ्चनिष्कं स्यात्कटका द्वादशा भवेत् २६३
निष्काष्टं कटिसूत्रञ्च कुण्डलन्दशनिष्ककम्
हेमयज्ञोपवीतञ्च पञ्चनिष्कं प्रकीर्तितम् २६४
इत्येवं विधिवत्प्रोक्तं पश्चादावाहयेच्छिवम्

दिवा रात्रं स्थिरं लग्नं विना लिङ्गर्चदैवतम् २६५
आदाय कुम्भे संयोज्य रात्रौ यजनहोमकौ
सायं प्रातः क्रमेणैव कुर्याद्देशिकस्सम्मतम् २६६
गर्भगृहं ततो गत्वा स्थण्डिलं चतुरश्रकम्
मध्ये तु शिवकुम्भः स्याद्वर्धनीं तस्य वामके २६७
अष्टकुम्भान् समादाय परितः स्थापयेत्क्रमात्
सकलीकरणं कृत्वा सङ्कल्पञ्च ततः परम् २६८
पुण्याहं वाचयेत्तत्र दर्भैः पुष्पैः परिस्तरेत्
लम्बकूर्चन्तु संग्राह्य लिङ्गस्योपरि विन्यसेत् २६९
आसनं वरणादीनि येतत्पूर्ववत्क्रमात्
नाळिकेरञ्च ताम्बूलं दापयेद्धूपदीपकौ २७०
कुम्भे चलासनं कल्प्य शक्त्यन्तमर्चयेत्क्रमात्
आसनं मूर्ति विन्यस्य दर्भनाडिं प्रकल्पयेत् २७१
नैवेद्यधूपदीपौ च न्यासं कृत्वा ततः परम्
अध्वषडकञ्च विन्यस्य अष्टत्रिंशत्कला न्यसेत् २७२
विद्यादेहं समावाह्य घटे नेत्रं प्रकल्पयेत्
गुरूपदिष्टमार्गेण मन्त्रमुच्चारयेच्छनैः २७३
सर्वावरणसंयुक्तं हृदयादिसमन्वितम्
लैङ्गस्थं देवमावाह्य कुम्भे संयोजयेत्क्रमात् २७४
ताम्बूलं गुळखण्डञ्च कदली फलमेव च
पाद्याचमनार्घ्यञ्च धूपदीपौ प्रदापयेत् २७५
पीठशक्ति समावाह्य वर्धन्यान्तु संयोजयेत्
अनन्तादीञ्च पूर्वादितन्तत्कुम्भेषु योजयेत्
गन्धपुष्पैस्समभ्यर्च्य नैवेद्यादि प्रकल्पयेत् २७६
यात्राहोमं तदग्रे तु कुण्डे वा स्थण्डिलोपरि
पूर्वोक्तविधिना चैव होमं कुर्याद्विचक्षणः २७७
पुष्पेणादाय तन्मूर्तिं शिवकुम्भे सुयोजयेत्
यात्रादानं ततः पश्चात् गृहप्रीतिञ्च दापयेत्
परिचारकमाहूय दीक्षितं विनयान्वितम् २७७-२

वस्त्रेणाच्छादा शिरसा गन्धादौस्संविभूष्य च
वाहयित्वा ततश्शम्भुकुम्भं क्षौमाद्यलंकृतम्  २७७-३
विद्येशकुम्भानादाय दीक्षितैर्वाहयेत्क्रमात्  २७८
कुम्भमुद्धृत्य शिरसा अनन्ताद्यैस्समावृतम्
आचार्योऽस्त्रं समुच्चार्य सकुशैः स्पर्शयेत् घटम्  २७९
स्वस्तिघोषसमायुक्तं दीपज्वालासमन्वितम्
छत्रचामरबृन्दैश्च सर्वातोद्यसमन्वितः  २८०
शालं गत्वाथ देवेशवेदिकोपरि मध्यमे
पश्चिमाभिमुखं स्थाप्य सावधानेन बुद्धिमान्  २८१
देवस्य वामभागे तु वर्धनीं विन्यसेद्बुधः
विद्येश्वरांश्च पूर्वादीन् प्रधानाभिमुखान्यसेत्  २८२
बन्धने तु प्रतिष्ठायामुत्सवे प्रोक्षणे तथा
पश्चिमद्वारमेवन्तु शालानाञ्च प्रकल्पयेत्  २८३
यस्यान्दिशि शिवे द्वारं तां प्राचीं परिकल्पयेत्
तत्र तत्पुरुषं वक्त्रं ऊर्ध्वञ्चाभिमुखं भवेत्  २८४
यागेशञ्च शिवाग्निञ्च स्थापयेत्पश्चिमाननम्
मखालये तु कुम्भञ्च किं कथं पश्चिमाननम्  २८५
नित्यद्वारस्य पूजाञ्च वृषकुम्भन्तु पश्चिमे
यद्वक्त्रं द्वारबन्धन्तत्पुरुषन्तदु भावयेत्  २८६
आचार्यो सकळीकृत्य स्थिरमासनमर्चयेत्
आसनाद्यादीनि सर्वाणि प्रागादिषु प्रकल्पयेत्  २८७
धूपदीपादिना पूज्य ततो भोगाङ्गमर्चयेत्
ईशानं नैर्ऋते देशे पश्चिमे तत्पुरुषन्तथा  २८८
अघोरमुत्तरे न्यस्य वानदक्षिणदेशके
पूर्वदेशे तु सद्यञ्च अर्चयेद्देशिकोत्तमः  २८९
हृदयं वायुदेशे तु शिरो वै नैर्ऋते यजेत्
शिखामीशानदिग्भागे कवचं पावके यजेत्  २९०
ईशानपश्चिमेऽस्त्रं स्यात् नयनं यज्ञपूर्वके
एवमेवं समभ्यर्च्य धूपदीपसमन्वितम्  २९१

द्वितीयं वरणादीनि प्रागादिषु प्रकल्पयेत्
तोरणं द्वारकुम्भञ्च लोकपालघटानपि २९२
मङ्गळाष्टकसंयुक्तं दशास्त्रं पूर्वतो यजेत्
विद्येश्वराञ्च पूर्वादि यथाकुण्डाग्निहोमयेत् २९३
दिवा यागे च संप्राप्ते पुरतः सूर्यमर्चयेत्
रात्रियागे च संप्राप्ते पुरतः सोममर्चयेत् २९४
पश्चाद्दिवाकरं पूज्य द्वारपूजाद्यनन्तरम्
दिवा वापि निशीथिन्यां पूजारम्भं प्रशस्यते २९५
होमारम्भो निशीथिन्यां सद्योऽधिवासनादृते
प्रशस्यते ततोऽन्यत्र होमारम्भं दिवाञ्चरेत् २९६
शान्ति नन्दिमहाकालं बलारातिंश्च पूर्वके
इन्द्राग्निमध्यमे भानुमाग्नेय्यामग्निपूजनम् २९७
विद्याभृङ्गिगणेशञ्च यमं याम्ये प्रपूजयेत्
नैर्ऋृत्यां वास्तुब्रह्माणं निर्ऋृतिं विष्णुमेव च २९८
निवृत्तिं वृषभं स्कन्दवरुणं पश्चिमे रमाम्
क्षेत्रेशं वायुविघ्नेशं वायव्यां दिशि पूजयेत् २९९
प्रतिष्ठागौरिचण्डेशं धनदं सौम्यदेशके
ऐशान्यां गुरुमीशानं ब्रह्माणं च प्रपूजयेत् ३००
कुबेरेशानयोर्मध्ये अस्त्रमस्त्रेश्वरीं न्यसेत्
मण्डपाराधनं कुर्यात्पूर्वोक्तेनैव वर्त्मना ३०१
प्रार्थयेत्परमेशानं शिवकुण्डान्तिकं व्रजेत्
कुर्यादध्ययनं दिक्षु शैवमन्त्रान्विदिक्षु च ३०२
ऋग्वेदाध्ययनं पूर्वे यजुर्वेदन्तु दक्षिणे
उत्तरे सामवेदन्तु पश्चिमेऽथर्वणन्तथा ३०३
प्रासादमीशकोणेषु वह्निकोणे त्वघोरकम्
मृत्युञ्जयन्तुं नैर्ऋृत्यां वायव्यामस्त्रमेव च ३०४
एवमेवं प्रकर्तव्यं विशेषमधुनोच्यते
शिवसंकल्पमेवोक्तं ततो रुद्रसूक्तकम् ३०५
कद्रुद्राय त्वमग्ने च पूर्वभागे जपेद्बुधः

श्रीसूक्तं पावमानञ्च पुरुषसूक्तत्रियम्बकम्  ३०६
शान्तिद्वयं यजेद्धीमान् दक्षिणे तु विशेषतः
कल्पसूक्तं शन्नवर्भं विष्णुसूक्तञ्च वारुणम्  ३०७
पश्चिमे तु जपेद्धीमान् पवमानं हिरण्यकम्
देवव्रतं ज्येष्ठसामं तथैव पुरुषावृतम्  ३०८
वामदेवं विरूपाक्षं चोत्तरे तु विशेषतः
आग्ने चोपनिषद्रौद्रं पुराणानि पठेत्क्रमात्  ३०९
आचार्यो मूर्तिपैः सार्धं ततो होमं समाचरेत्
होमारम्भस्य पूर्वे तु स्रुक्स्रुवञ्चेन्धनं तुषम्  ३१०
परिधिञ्चैव दर्भांश्च समिदाज्यं चरुं तथा
होमद्रव्याणि सर्वाणि गन्धपुष्पञ्च धूपकम्  ३११
दीपं नैवेद्यपात्राणि अरणिञ्च कमण्डुलुम्
वर्धनीमक्षतं द्रव्यं संप्राप्ते होमसाधने  ३१२
आहृत्य होमसंभारान् नवकुण्डं प्रति क्रमात्
प्रधाने देशिकः प्रोक्तः अन्यकुण्डेषु मूर्तिपाः  ३१३
कुण्डसंस्कारपूर्वन्तु शैवाग्निं साधयेत्ततः
असंस्कृतेषु कुण्डेषु हुतं भवति निष्फलम्  ३१४
तस्मात्कुण्डस्य संस्कारं कुर्यादस्त्रेण देशिकः
द्वितालमात्रमायामं कनिष्ठाङ्गुलिनाहकम्  ३१५
अवक्राद्यप्रणञ्चैव श्यामाः परिधयः क्रमात्
पूर्वाग्रौ च चोत्तराग्रौ च पूर्वादिमेखलोपरि  ३१६
त्रिंशद्दर्भसमायुक्तान् वितस्तिद्वयदीर्घिकान्
वेणितान्वर्तितान्वापि विष्टरानार्द्रसंयुतान्  ३१७
दक्षिणावर्तितग्रन्थीन् विन्यसेन्मध्यमेखले
षट्त्रिंशाङ्गुलमायामं ग्रन्थिं पक्षाङ्गुलान्वितम्  ३१८
अग्रं वेदाङ्गुलं प्रोक्तं दर्भैः षोडशभिर्युतम्
परिस्तरणमेवं स्यात् मेखलयोक्षिपेद्बुधः  ३१९
मुष्टिमात्रं क्षिपेल्लाजं मेखलोर्ध्वे चतुर्दिशि
विकिरेल्लाजपुष्पैश्च कुण्डमेवेतु शेषकम्  ३२०

ब्रह्मा विष्णुश्च रुद्रश्च ग्रनन्तं परिधौ यजेत्
विष्टरेषु तु लोकेशान् वज्रादीन् स्तरणे न्यसेत् ३२१
एवमेव प्रकारेण पूजयेद्देशिकोत्तमः
प्रधानकुण्डे प्रथमं शिवाग्नेश्च समुद्भवः ३२२
ग्राचार्यो विधिना कृत्वा तत्तत्कुण्डेषु तं क्षिपेत्
तत्र तत्रासनं कल्प्य तत्तन्मूर्तीः प्रकल्पयेत् ३२३
ततः कुण्डस्थे वह्नीनां नाम वच्मि यथाक्रमम्
शैवमग्निं प्रधाने च ततः प्रागादिकुण्डके ३२४
पूर्वे त्वाहवनीयं स्याद्वृद्धाग्निरग्निदेशके
दक्षिणे दक्षिणाग्निं स्यान्नैर्ऋत्यां यौवनानलः ३२५
पश्चिमे गार्हपत्याग्निं बालाग्निः वायुकोणके
केवलाग्निं स्तूत्तरस्यां सामान्यमीशकोणके ३२६
इति नामां नाम कृत्वा तत्तद्ध्यानं समाचरेत्
पञ्चवक्त्रं युतं रक्तं सप्तजिह्वाविराजितम् ३२७
दशहस्तन्त्रिणेत्रञ्च सर्वाभरणभूषितम्
रक्तवस्त्रपरीधानं पङ्कजोपरि संस्थितम् ३२८
बद्धपद्मासनासीनं मेखलात्रयपादयुक्
शूलवज्रञ्च खड्गञ्च शक्तिञ्च घृणि दक्षिणे ३२९
गदादण्डञ्च पाशञ्च पद्मञ्चक्रञ्च वामके
ऊर्ध्ववक्त्रे तिस्त्र जिह्वाः शेषाः प्रागादिषु क्रमात् ३३०
स्वाहा देवी स्वधा पत्नी दक्षिणं वाममुच्यते
शैवाग्निध्यानमुद्दिष्टं शिवकुण्डे प्रकीर्तितम् ३३१
एकवक्त्रं त्रिणेत्रञ्च त्रिमेखलत्रिपादकम्
ग्रक्षमालां त्रिशूलञ्च स्त्रुवञ्च दक्षिणे करे ३३२
ग्रङ्कुशं डमरुकञ्चैव स्त्रुवञ्च वामहस्तके
रक्तवर्णं सुखासीनं पीतवस्त्रेण वेष्टितम् ३३३
ध्यायेदाहवनीयाग्निं पूर्वस्यां कुण्डमध्यमे
चतुर्भुजं त्रिणेत्रञ्च एकवक्त्रं जटाधरम् ३३४
शूलं परशुञ्चैव ग्रभयं वरदान्वितम्

श्वेताभं वृषभारूढं वृद्धाग्निं पावके यजेत्  ३३५
द्विमुखं स्वर्णवर्णाभं त्रिपादं सप्तहस्तकम्
हिरण्यादिचतस्रस्तु जिह्वा दक्षिणवक्त्रके  ३३६
सुप्रभादि त्रयो जिह्वा वामवक्त्रे तु संस्थितः
शक्तिरग्निस्रुवञ्चैव स्रुक्सव्ये घृतपात्रकम्  ३३७
तोमरं परशुं वामे अजवाहनसंयुतम्
दक्षिणाग्निमिति ध्यात्वा न्यसेद्दक्षिणकुण्डके  ३३८
त्रिणेत्रं पञ्चवदनं रक्ताङ्गं दशहस्तकम्
शूलं परशुखड्गञ्चाभयं वज्रञ्च दक्षिणे  ३३९
टङ्कं पाशाब्जचक्राणि वरदञ्चैव वामके
हिरण्यकनके सव्ये ईशे द्वे शेषमेककम्  ३४०
यौवनाग्निं वृषारूढं नैरृत्यां विन्यसेद्बुधः
रक्ताङ्गं रक्तवस्त्राढ्यं वरदाभयसंयुतम्  ३४१
स्रुक्स्रुवौ चोर्ध्वहस्तौ तु मुक्ताभरणभूषितम्
सप्तजिह्वासमायुक्तं एकवक्त्रं जटाधरम्  ३४२
अश्वारूढं गार्हपत्यं ध्यायेत्पश्चिमकुण्डके
द्विमुखञ्चैकहृदयं चतुःश्रोत्रं द्विनासिकम्  ३४३
चतुःशृङ्गं वृषारूढं बालादित्यसमप्रभम्
स्रुक्स्रुवौ चाक्षमालाञ्च शक्तिदक्षिणपार्श्वके  ३४४
तोमरं व्यजनञ्चैव घृतपात्रन्तु वामके
बालाग्निरूपमेवन्तु विन्यसेद्वायुकुण्डके  ३४५
द्विनेत्रं द्विभुजञ्चैव वरदाभयसंयुतम्
शुक्लवस्त्रसमायुक्तं श्वेतरक्तसमन्वितम्  ३४६
सर्वालङ्कारसंयुक्तं पङ्कजासनसंस्थितम्
केवलाग्निमिति ध्यात्वा कुण्डमध्ये तु चोत्तरे  ३४७
द्विमुखं वेदशृङ्गञ्चाभयं शक्तिस्रुक्स्रुवौ
वरदं खेटमनलं वहन्तं सव्यवामके  ३४८
सामान्याग्निस्वरूपन्तु विन्यसेदीशकुण्डके
पूर्वोक्तेनैव मार्गेण तत्तत्कुण्डेषु देशिकः  ३४९

ध्यात्वा वह्निं प्रधाने तु यजेच्छम्भुमनन्यधीः
प्रधाने चासनं कल्प्य मूर्तिध्यानञ्च विन्यसेत् ३५०
पञ्चवक्त्रं दशभुजं गोक्षीरधवलप्रभम्
सर्वसिद्धिप्रदं ध्यात्वा आसीनं पश्चिमानतम् ३५१
शिवाग्नौ शिवमावाह्य नित्यवत्पूजयेच्छिवम्
पञ्चावरणसंयुक्तं पाद्यादिदीपसंयुतम् ३५२
एवं संपूजयेत्पूर्वं क्ष्मामूर्तिं पूर्वतो यजेत्
क्ष्मावह्नियजमानाकजलमायुनिशाकरः ३५३
होमान्तं मूर्तयश्चाष्टौ कुण्डां मूर्तिस्तु धारिकः
भवश्चोग्रश्च शर्वश्च महादेवश्च रुद्रकः ३५४
भीमः पशुपतिश्चैव ईशानाश्चाष्टमूर्तयः
भवश्च पूर्वादिक्कुण्डे आग्नेय्यामुग्र एव च ३५५
शर्वश्च दक्षिणे कुण्डे महादेवस्तु नैर्ऋते
रुद्रश्च पश्चिमे कुण्डे भीमो वै वायुकुण्डके ३५६
पशुपतिश्चोत्तरे कुण्डे ऐशान्यामीश एव च
त्रिणेत्राश्चतुर्भुजाश्चैव जटामण्डलधारिणः ३५७
सर्वाभरणसंपूर्णाः कुण्डनां मूर्तयो स्मृतः
इत्थञ्च मूर्तिपाः प्रोक्ताः मूर्तीशनधुनोच्यते ३५८
पुरुषादीन् दिक्षु कुण्डे विदिक्षु हृदयादिकान्
ईशाननेत्रमस्त्रञ्च मूलाञ्चैव प्रधानके ३५९
ईशानं स्फटिकाभासं शिवकुण्डे यजेद्बुधः
पुरुषं पूर्वके कुण्डे पीतवर्णसमद्युतिम् ३६०
अघोरमञ्जनाभासं ध्यायेद्दक्षिणकुण्डके
सौम्यकुण्डे यजेद्वामं रक्तवर्णसमन्वितम् ३६१
सद्यं पश्चिमकुण्डं तु श्वेतवर्णसमन्वितम्
हृदि वह्नौ इमे ध्येयाः त्रिणेत्राश्च चतुर्भुजाः ३६२
वरदाभयसंयुक्ताः टङ्कशूलसमन्विताः
सर्वाभरणसंपूर्णाः श्वेतवस्त्रानुधारिणः ३६३
हृदयं श्वेतवर्णाभं आग्नेय्यां कुण्डमुच्यते

ईशकुण्डे न्यसेद्विद्वान् पीताभञ्च शिरोच्यते ३६४
शिखान्नैर्ऋतिदिग्भागे श्यामवर्णसमद्युतिम्
कवचं धूम्रवर्णाभं वायुकुण्डे न्यसेद्बुधः ३६५
नेत्रञ्च श्यामलाकारमस्त्रञ्च कृष्णसन्निभम्
द्वयञ्च शिवकुण्डे तु विन्यसेद्देशिकोत्तमः ३६६
हृदयाद्यस्त्रपर्यन्ताः त्रिणेत्राश्च चतुर्भुजाः
पाशशूलवराभीतिपीताम्बरधरा इमे ३६७
सदाशिवस्वरूपाश्च ज्ञातव्याश्शैवपारगैः
तत्तत्कुण्डे इमे न्यस्यास्तद्बाह्ये वसवस्तथा ३६८
तद्बाह्ये मरुतश्चैव लोकपालाश्च तद्बहिः
लोकपालैर्विहीनश्चेन्मध्यमं होममीरितम् ३६९
मरुद्भिर्वसुभिर्हीनो सुरहीनैश्च कन्यसम्
कुण्डाधिदेवतान् सर्वान् कुण्डमध्ये न्यसेद्गुरुः ३७०
पाद्यादिदीपपर्यन्तमर्चयेद्विधिना ततः
हस्तैकमानकुण्डे तु जुहुयात्सर्पिषा गुरुः ३७१
सहस्रावधिसंख्याञ्च न न्यूनं नाधिकं हुनेत्
प्रीतिकालं हुनेदित्थं दशांशं सर्पिषा क्रमात् ३७२
पलाशञ्चरुलाजैश्च होमं कुर्यात्प्रधानके
अन्यानि समिदादीनि पञ्चविंशतिसंख्यया ३७३
शिवकुण्डे हुनेद्देवमन्यकाण्डेष्वतः परम्
पूर्वादीशानकुण्डान्तं यजेद्ब्रह्मा षडङ्गकान् ३७४
प्रधाने तु घृतं हुत्वा पञ्चाशद्द्वादशाधिकम्
तदर्थं समिधा हुत्वा चरुन्तत्संख्यया तथा ३७५
तत्तत्कुण्डोक्तद्रव्येण हुत्वा पूर्वोक्तसंख्यया
अन्यद्रव्याणि सर्वाणि यथालाभं हुनेद्गुरुः ३७६
कपिलाया घृतं श्रेष्ठं मिश्रयोन्याञ्च मध्यमम्
मेषाज्यं कन्यसं प्रोक्तं माहिषं वर्जयेद्घृतम् ३७७
सहस्रं त्रिपादं वा सहस्रार्धमथापि वा
उत्तमादिक्रमेणैव प्रधाने हेमयेद्गुरुः ३७८

दिक्षु विदिक्षु कुराडेषु पञ्चब्रह्मषडङ्गकान्
प्रधाने होमसंख्याया अर्धार्धं होममाचरेत् ३७९
प्रोक्तेन्तरादिदेवानां होममावरणात्मनाम्
प्रधानकुराडे ज्ञेयं हि शतांशं होमसंख्यया ३८०
चतुःखारिञ्च भारञ्च खारी द्वौ संग्रहेद्धृतम्
प्रतिकालं हुनेद्विद्वान् उत्तमादिक्रमेण तु ३८१
द्विपर्वग्राहि तर्जन्यां बिन्दुरित्यभिधीयते
बिन्दुषट्कं तु कर्षार्धं तद्द्वयं कर्षकं भवेत् ३८२
कर्षद्वयं तु मुष्टिं स्यात् तद्द्वयं प्रसृतिर्भवेत्
तद्द्वयं कुडुपं प्रोक्तं तद्द्वयं धारणं भवेत् ३८३
धारणद्वितयं प्रस्थं द्वात्रिंशाहुतिप्रस्थकम्
कर्षपूर्णघृतेनैव एकाहुतिमथाचरेत् ३८४
गुञ्जसी वाथ माषस्य विंशतिर्धारणाः स्मृताः
धारणाष्टपलं वाथ मुष्टिर्वाथ भवेदिह ३८५
उक्तान्यचतरचातुष्कं कुडुपं परिचक्षते
प्रस्थन्तु तच्चतुष्कं स्यात् तच्चतुष्कं तु आढकम् ३८६
नवधान्यादिकान् सर्वान् आढकेन पृथक्पृथक्
द्विप्रस्थं सर्षपं प्रोक्तं तिलमञ्जलिमातृकम् ३८७
एवमेव प्रमाणेन प्रतिकालं हुनेत्क्रमात्
घृतं तु व्याहृतिः प्रोक्तं पञ्चपक्षमथोच्यते ३८८
पूर्वे चाहवनीयाग्निः दक्षिणाग्निस्तु दक्षिणे
पश्चिमे गार्हपत्याग्निः केवलाग्निस्तु चोत्तरे ३८९
ईशाने तु शिवाग्निस्तु पञ्चाग्निरिति कीर्तिताः
प्रधाने व्योममूर्तिः स्यात् वायुमूर्तिश्च पूर्वके ३९०
दक्षिणे चाग्निमूर्तिः स्याज्जलमूर्तिश्च सौम्यके
क्ष्मामूर्तिः पश्चिमे कुराडे कुराडानां मूर्तिधारिकाः ३९१
ततो मूर्तीश्वरान् वच्मि प्रधानात्पश्चिमान्तकम्
पञ्चपक्षे समावाह्य रूपध्यानमथोच्यते ३९२
ईशे सदाशिव प्रोक्तं रूपध्यानं च पूर्ववत्

पञ्चावरणमार्गेण पूजयेद्देशिकोत्तमः ३९३
पूर्वकुण्डे त्रिणयनं एकवक्त्रं स्मिताननम्
व्याघ्रचर्मपरीधानं नागयज्ञोपवीतिनम् ३९४
शुद्धस्फटिकसङ्काशं चन्द्रार्धकृतशेखरम्
अक्षमालां त्रिशूलञ्च खड्गभीति च सव्यके ३९५
बाणं कमण्डलुं चाब्जं वरं वामे दधानकम्
इत्थं ध्यात्वेश्वरं विद्वान् सर्वाभरणभूषितम् ३९६
रुद्रदक्षिणकुण्डे तु भस्मोद्धूलितविग्रहम्
चतुर्भुजन्त्रिणेत्रञ्च जटामकुटमण्डितम् ३९७
माणिक्यनेकवर्णाभं पीतवस्त्रेण वेष्टितम्
सव्ये व्याख्यानमनलं वामे पुस्तकशूलधृक् ३९८
ध्यायेद्युत्तरकुण्डे तु विष्णुञ्च नीलसन्निभम्
एकवक्त्रं द्विनयनं किरीटमकुटोज्वलम् ३९९
पीताम्बरधरं शङ्खं गदाचक्राब्जधारिणम्
सर्वलक्षणसंयुक्तं मुक्ताभरणभूषितम् ४००
ब्रह्माणं पश्चिमे कुण्डे मौञ्जीदर्भैरलंकृतम्
चतुर्भुजं चतुर्वक्त्रं वक्त्रं प्रति द्विलोचनम् ४०१
पीतवर्णं सुवदनं चित्रवस्त्रसमन्वितम्
सर्वावयवसंपूर्णं सृग्दण्डाक्षकमण्डलुम् ४०२
एवं मूर्तीश्वराः प्रोक्ताः मन्त्रञ्चैवाधुनोच्यते
पूर्वे पुरुषहृत्प्रोक्तं याम्ये घोरं शिरस्तथा ४०३
पाशौ सद्यश्च कवचं सौम्ये वामशिखैस्तथा
नेत्रास्त्रेशानदेवा स्युरर्चयित्वा प्रधानके ४०४
पूर्वादिकुण्डा द्वौ देवौ वर्णध्यानञ्च पूर्ववत्
तत्तत्कुण्डे समावाह्य तत्तन्मन्त्रेण होमयेत् ४०५
एव पञ्चविधं प्रोक्तं शेषं पूर्ववदाचरेत्
कल्पयेद्येककुण्डश्चेद्यथावित्तानुसारतः ४०६
होमं कुर्याद्विधानोक्तं ब्रामांगानां दशांशकम्
इत्येवं त्रिविधं प्रोक्तं समिद्द्रव्यमिहोच्यते ४०७

वारुणेशानपर्यन्तं जिह्वास्थानं प्रकीर्तितम्
हिरण्यायां समिद्धोमं मधुदण्डं तथैव च ४०८
कनकायां घृतं प्रोक्तं तस्यामेव पयो दश
रक्तायान्तु चरुं हुत्वा फलापूपं तथैव च ४०९
लाजं हुत्वा तु कृष्णायां नीवारं चणमेव च
सुप्रभायां हुनेत् सक्तु निष्पावमाढकन्तथा ४१०
यवं हुत्वा तु रक्तायां वेणञ्च मुद्गमेव च
बहुरूपे तिलं माषं सिद्धार्थं गोधुमं तथा ४११
द्रव्यान्येतानि सर्वाणि कनकायां हुनेत्क्रमात्
कर्षपूर्णेन सर्पिस्तु समिधो द्वादशाङ्गुलम् ४१२
कांस्यं मृत्ताम्रजां स्थालीं संग्रहेद्विधिमानतः
प्रस्थाष्टतण्डुलं ग्राह्यं देशिकस्तु पचेच्चरुम् ४१३
विधिपक्वं तथान्यद्वा भासमात्रेण तद्धुनेत्
विधिपक्वचरुं होमं कुर्यात् संपादसंस्कृतिः ४१४
इन्धनानि क्षिपेदग्नौ कुब्जहस्तेन लाजकम्
प्रथुकं धानकं सक्तु मुष्टिमात्रेण होमयेत् ४१५
गोधूमं वैणवञ्चैव नीवारं शुक्तिमात्रतः
निष्पावं नवभिः प्रोक्तं चणान्दशभिरेव च ४१६
पञ्चाङ्गुल्या हुनेद्धीमान् आढकं लाजमाषकम्
कुलत्थं माषमुद्गौ च प्रियङ्गु श्यामकं तथा ४१७
शुक्तिमात्राहुतिं हुत्वा शुद्ध्यर्थं यवसर्षपम्
हुत्वा नीलिमृगीमुद्रा द्रव्या ते व्याहृतिं हुनेत् ४१८
पञ्चानार्थाय चैवोक्तं चण्डकञ्च पृथक्पृथक्
तत्तद्द्रव्योक्तमानेन तण्डुलञ्च क्रमात्पचेत् ४१९
अग्नौ द्रव्यं हुनेद्धीमान् शुद्धान्नं मुद्गमन्नकम्
क्षीरान्नं कृसरान्नञ्च गुलान्नञ्चाक्षमात्रतः ४२०
स्वप्रमाणान्यपूपानि चतुःकृत्वाथवा हुनेत्
पयो दधि मधु क्षीरं क्रूरेक्षुजन्मवस्तुनि ४२१
स्रुवं पूर्णाहुतिं हुत्वा पुन्नागफलवद्गुलम्

इक्षुपर्वविशालेन कदल्यार्धेन होमयेत् ४२२
हुत्वा चूतं स्वप्रमाणैः भित्वाष्टौ नाळिकेरकम्
लिकुचं स्वप्रमाणेन कन्दकान् त्वक् विसर्ज्य च ४२३
त्रिंशदंशेन भागेन भित्वा तु फनसं हुनेत्
कपालसूरणं बालं पद्मकन्दञ्च नीलकम् ४२४
विभूतिफलमात्रेण कन्द भित्वा तु होमयेत्
चन्दनञ्चणमात्रेण ततो मृगमदद्वया ४२५
चन्द्रकुङ्कुमकासीरकस्तूरिकृष्णकान्
माषवद्गुग्गुलं धूपं बदरीफलवद्धुनेत् ४२६
उशीरं जलपिङ्गञ्च मरुद्दमनतालकम्
द्व्यङ्गुलं लतानाञ्च श्रीपत्रञ्च सुपुष्पकम् ४२७
जातीफलञ्च ताम्बूलं येलालवङ्गसंयुतम्
करेण च हुनेद्दिव्यं स्त्रुवपूर्णेन व्याहृतिः ४२८
सृचा बटेन संपूर्णं पूर्णाहुतिमथाचरेत्
पालाशं सद्यमन्त्रेण मूलेनाज्यन्तु होमयेत् ४२९
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु
सक्तुश्च वाममन्त्रेण ईशेन धानकं हुनेत् ४३०
समिद्द्रव्याणि सर्वाणि पूर्वं हुत्वा प्रधानके
पश्चात् पूर्वादिकुण्डेषु होमशेषं ततो हुनेत् ४३१
हुत्वा ईशस्य निष्पावं अपामार्गं प्रधानके
गोधूमाश्वत्थपूर्वे तु याम्ये तिलमुदुम्बरम् ४३२
आढकञ्च वटं सौम्ये प्लक्षमुद्गञ्च पश्चिमे
शमीसर्षपमग्नौ तु ऐशान्यां अर्कमाषकौ ४३३
खादिरं शालि नैर्ऋत्यां वायव्यां चणबिल्वकम्
नेत्राणाम्रञ्च नीवारं शिवकुण्डे हुनेद्बुधः ४३४
अस्त्रं सवैणवं दूर्वा तथा च शिवकुण्डके
दिक्षु विदिक्षु कुण्डेषु तत्तन्मन्त्रेण होमयेत् ४३५
समिदाज्यचरून् लाजान् दिक्द्रव्यञ्च समानकम्
अन्यद्रव्याणि सर्वाणि न्यूने वाप्यधिकेऽपि वा ४३६

यथा संभवमानेन होमयेद्देशिकोत्तमः
ईशाने यवधान्यञ्च मूलेन राजमाषकम् ४३७
शिखायां श्यामकं हुत्वा प्रियङ्गुश्च कुलुत्थकम्
अघोरेणा तु पञ्चान्नमपूपं शिरसा हुनेत् ४३८
नेत्रेण पायसं हुत्वा दुग्धमीशेन होमयेत्
दधि तत्पुरुषेणैव मधू च वाममन्त्रतः ४३९
गुळञ्चाघोरमन्त्रेण मूलेना इक्षुदण्डकम्
ईशानेन फलादिञ्च कन्दादि मूलमन्त्रतः ४४०
मूलेन चन्दनञ्चैव कस्तूरिकृष्णगन्धकम्
गोरोचनञ्च काश्मीरं कुङ्कुमं मृगनाभिकम् ४४१
हिमतोयञ्च कर्पूरं सर्वं च जुहुयात्क्रमात्
बीजमुख्यैश्च श्रीबेरं उशीरं मरु गुग्गुलम् ४४२
दशाक्षरेण पुष्पाणि बिल्वं पाशुपतेन च
अघोरेण तु ताम्बूलं वासनाद्रव्यसंयुतम् ४४३
अन्यानि होमयोग्यानि मूलेनैव तु होमयेत्
द्रव्यं प्रति विशेषेण व्याहृतिञ्च पुनः पुनः ४४४
पूर्वादिवायुकुण्डान्तं होमकर्म समाप्य च
पूर्णाहुतिं ततः कृत्वा व्याहृत्या च हुनेत्क्रमात् ४४५
धूपदीपौ ददेत् पश्चात् तदन्ते मेखलात्रये
तत्तत्स्वनाममन्त्रेण लोकेशादिबलिं क्षिपेत् ४४६
कुण्डपार्श्वेषु सर्वेषु सदक्षे बलिमाचरेत्
पुरुषादिवायुकुण्डान्तं अन्तर्बाह्ये बलिं क्षिपेत् ४४७
नाडिसन्धानमार्गेण तत्तत्कुण्डाधिदेवताः
कुशाक्षतेन पुष्पेण संग्राह्यं देशिकोत्तमाः ४४८
शिवकुण्डगताग्निस्थं शिवे संयोजयेत्ततः
सर्वातोद्यसमायुक्तं वेदघोषसमन्वितम् ४४९
महापूर्णाहुतिं हुत्वा व्याहृतिं जुहुयात्ततः
प्रदर्श्य धूपदीपादीन् अन्तर्बाह्ये बलिं ददेत् ४५०
श्रोत्राभिबन्दनं कृत्वा हंसं रक्षोपदे त्वया

सकळीकरणं कृत्वा जपं कृत्वा समर्पयेत् ४५१
तत्तत्कुण्डगताग्निञ्च तत्तत्कुण्डेषु रक्षयेत्
अथवाग्निञ्च संग्राह्य शिवकुण्डे नियोजयेत् ४५२
उत्थाने आसने क्रोधे क्षुधे निष्ठीवने क्रमे
वायुचारे भयोत्पन्ने भाषणोऽर्च्य दीक्षितैः ४५३
श्येनोद्गारे च सन्तापे क्रियाविस्मृति संभवेत्
मन्त्रोक्तमन्त्रकार्येषु व्याहृत्याहुतिमाचरेत् ४५४
ततो कुम्भान्तिकं गत्वा वेद्या दक्षिणभागतः
पुष्पाञ्जल्या पूजयित्वा तत्त्वं तृतीयमन्त्रतः ४५५
धूपदीपौ ददेत्पश्चात् महानैवेद्यमाचरेत्
अतुर्हस्तं तथापात्रं चतुःपात्रन्तु प्रस्थकम् ४५६
आढकं तच्चतुष्कं स्यात् हरिद्रोणं चतुष्ककम्
द्विद्रोणादष्टद्रोणं च नित्यमेवं विधीयते ४५७
दक्षिणे दक्षिणाग्निं स्यान्नैर्ऋत्यां यौवनानलः
पश्चिमे गार्हपत्याग्निं बालाग्निं वायुकोणके ४५८
केवलाग्निस्तु तरस्यां सामान्यमीणकोणके
इति नम्नाग्निमत्कृत्वा तत्तद्ध्यानं समाचरेत् ४५९
पञ्चवक्त्रयुतं रक्तं सप्तजिह्वाविराजितम्
दशहस्तं त्रिणेत्रं च सर्वाभरणभूषितम् ४६०
रक्तवस्त्रपरीधानं पङ्कजोपरिसंस्थितम्
बद्धपद्मासनासीनं मेखलात्रयपादयुक् ४६१
शूलं वज्रं च खड्गञ्च शक्तिं च घृणि दक्षिणे
गदादण्डौ च पाशं च पद्मं चक्रं च वामके ४६२
ऊर्ध्ववक्त्रे तिस्र जिह्वा शेषाः प्रागादिषु क्रमात्
स्वाहा देवी स्वधा पत्नी दक्षिणं वाममुच्यते ४६३
शैलवाग्निध्यानमुद्दृष्टं शिवकुण्डे प्रकीर्तितम्
एकवक्त्रं त्रिणेत्रं च त्रिमेखलत्रिपादकम् ४६४
अक्षमालां त्रिशूलं च स्रवं च दक्षिणे करे
अङ्कुशं डमरुकं चैव सृवं च वामहस्तके ४६५

रक्तवर्णं सुखासिनं पीतवस्त्रेण वेष्टितम्
ध्यायेदाहवनीयाग्निं पूर्वस्यां कुण्डमध्यमे ४६६
चतुर्भुजं त्रिणेत्रं च एकवक्त्रं जडाधरम्
त्रिशूलं परशुं चैव अभयं वरदान्वितम् ४६७
श्वेताभं वृषभारूढं वृद्धाग्निं पावके यजेत्
द्विमुखं स्वर्णवर्णाभं त्रिपादं सप्तहस्तकम् ४६८
हिरण्यादिचतस्रस्तु जिह्वा दक्षिणवक्त्रके
सुप्रभादित्रयो जिह्वा वामवक्त्रे तु सस्थिताः ४६९
शक्तिरग्निस्त्रुवं चैव स्त्रुक् सव्ये घृतपात्रकम्
तोमरं परशुं वामे अजवाहनसंयुतम् ४७०
दक्षिणाग्निमिति ध्यात्वा व्यसेद्दक्षिणकुण्डके
त्रिनेत्रं पञ्चवदनं रक्ताङ्गं दशहस्तकम् ४७१
शूलं परशुखड्गं च भयं वज्रं च दक्षिणे
टङ्कपाशाब्जचक्राणि वरदं चैव वामके ४७२
हिरण्यकनके सव्ये ईशे द्वे शेषमेककम्
यौवनाग्निं वृषारूढं नैर्ऋत्यां विन्यसेद्बुधः ४७३
रक्ताङ्गं रक्तवस्त्राढ्यं वरदाभयसंयुतम्
स्त्रुक्स्त्रुवौ चोर्ध्वहस्तौ तु मुक्ताभरणभूषितम् ४७४
सप्तजिह्वासमायुक्तं एकवस्त्रं जडाधरम्
अश्वारूढं गार्हपत्यं ध्यायेत्पश्चिमकुण्डके ४७५
द्विमुखं चैकहृदयं चतुश्रोत्रं द्विनासिकम्
चतुशृङ्गं वृषारूढं बालादित्यसमप्रभम् ४७६
स्त्रुक्स्त्रुवौ चाक्षमालां च शक्तिर्दक्षिणपार्श्वके
तोमरं व्यजनं चैव घृतपात्रं तु वामके ४७७
बालाग्निरूपमेवं तु विन्यसेत् वायुकुण्डके
द्विनेत्रं द्विभुजं चैव वरदाभयसंयुतम् ४७८
शुक्लवस्त्रसमायुक्तं श्वेतरक्तसमन्वितम्
सर्वालङ्कारसंयुक्तं पङ्कजासनसंस्थितम् ४७९
केवलाग्निमिति ध्यात्वा कुण्डमध्ये तु चोत्तरे

द्विमुखं वेदशृङ्गं चाभयं शक्तिस्त्रुक्स्त्रुवौ ४८०
वरदं खेटमनलं वहन्तं सव्यवामके
सामान्याग्निस्वरूपं तु विन्यसेदीशकुराडके ४८१
पूर्वोक्तेनैव मार्गेण तत्तत्कुराडेषु देशिकः
ध्यात्वा वह्निं प्रधाने तु यजे छशंभुमनन्यधीः ४८२
प्रधाने चासनं कल्प्य मूर्तिध्यानं च विन्यसेत्
पञ्चवक्त्रं दशभुजं गोक्षीरधवलप्रभम् ४८३
सर्वसिद्धिप्रदं ध्यात्वा ग्रासीनं पश्चिमाननम्
शिवाग्नौ शिवमावाह्य नित्यवत्पूजयेत् शिवम् ४८४
पञ्चावरणसंयुक्तं पाद्यादिदीपसंयुतम्
एवं संपूजयेत्पूर्वं क्ष्मामूर्तिं पूर्वतो यजेत् ४८५
क्ष्मावह्नियजमानार्क जलवायुनिशाकराः
व्योमान्तं मूर्तयश्चाष्टौ कुराडान्मूर्तीस्तु धारिकाः ४८६
भावश्चोग्रश्च शर्वश्च महादेवश्च रुद्रकः
भीमः पशुपतिश्चैव ईशानश्चाष्टमूर्तयः ४८७
भवश्च पूर्वदिक्कुराडे ग्राग्नेय्यामुग्र एव च
शर्वश्च दक्षिणे कुराडे महादेवस्तु नैर्ऋते ४८८
रुद्रश्च पश्चिमे कुराडे भीमो वै वायुकुराडके
पशुपतिश्चोत्तरे कुराडे ऐशान्यामीश एव च ४८९
त्रिणेत्राश्चतुर्भुजाश्चैव जटामकुटधारिणः
सर्वाभरणसंपूर्णाः कुराडानां मूर्तयः स्मृताः ४९०
इत्थं च मूर्तिपाः प्रोक्ताः मूर्तिश्चाधुनोच्यते
पुरुषादीन् दिक्षु कुराडे विदिक्षु हृदयादिकान् ४९१
ईशाननेत्रमस्त्रं च मूलं चैव प्रधानके
ईशानं स्फटिकाभासं शिवकुराडे यजेद्बुधः ४९२
पुरुषं पूर्वके कुराडे पीतवर्णसमद्युतिम्
ग्रघोरमञ्जनाभासं ध्यायेद्दक्षिणकुराडके ४९३
सौम्यकुराडे यजेद्वामं रक्तवर्णसमन्वितम्
सद्यं पश्चिमकुराडे तु श्वेतवर्णसमन्वितम् ४९४

हृदि वह्नौ इमे ध्येयास्त्रिणेत्राश्च चतुर्भुजाः
वरदाभयसंयुक्ताः टङ्कशूलसमन्विताः ४९५
सर्वाभरणसंपूर्णाः श्वेतवस्त्रानुधारिणः
हृदयं श्वेतवर्णाभमाग्नेय्यां कुण्डमुच्यते ४९६
ईशकुण्डे न्यसेद्विद्वान् पीताभं च शिर उच्यते
शिखां नैर्ऋति दिग्भागे श्यामवर्णसमद्युतिम् ४९७
कवचं धूम्रवर्णाभं वायुकुण्डे न्यसेद्बुधः
नेत्रं च श्यामलाकारमस्त्रं च कृष्णसन्निभम् ४९८
द्वयं च शिवकुण्डे तु विन्यसेद्देशिकोत्तमः
हृदयाद्यस्त्रपर्यन्तास्त्रिणेत्राश्च चतुर्भुजाः ४९९
पाशशूलवराभीति पीताम्बरधरा इमे
सदाशिवस्वरूपाश्च ज्ञातव्याश्शैवपारगैः ५००
तत्तत्कुण्डे इमान् न्यस्य तद्बाह्ये वसवस्तथा
तद्बाह्ये मरुतश्चैव लोकपालांश्च तद्बहिः ५०१
लोकपालैर्विहीनश्चेन्मध्यमं होममीरितम्
मरुद्भिर्वसुभिर्हीनो सुरहीनैश्च कन्यसम् ५०२
कुण्डाधिदेवतान् सर्वान् कुण्डमध्ये न्यसेद्गुरुः
पाद्यादि पपर्यन्तमर्चयेद्विधिना ततः ५०३
हस्तैकमनुकुण्डे तु जुहुयात् सर्पिषा गुरुः
सहस्त्रावाधिसंख्यां च न न्यूनं नाधिकं हुनेत् ५०४
प्रीतिकालं हुनेदित्थं दशांशं सर्पिषा क्रमात्
पलाशं चरुलाजैश्च होमं कुर्यात् प्रधानके ५०५
अन्यानि समिद्द्रव्याणि पञ्चविंशतिसंख्यया
शिवकुण्डे हुनेद्देवमन्यकुण्डेष्वतः परम् ५०६
पूर्वादीशानकुण्डान्तं यजेद्ब्रह्मं षडङ्गकान्
प्रतिकुण्डं घृतं हुत्वा पञ्चाशद्द्विशताधिकम् ५०७
तदर्धं समिधं हुत्वा चरुं तत्संख्यया तथा
तत्तत्कुण्डोक्तद्रव्येण हुत्वा पूर्वोक्तसंख्यया ५०८
अन्यद्रव्याणि सर्वाणि यथा लब्धं हुनेद्गुरुः

कपिलायां घृतं श्रेष्ठं मिश्रयोन्योश्च मध्यमम्  ५०९
मेषाज्यं कन्यसं प्रोक्तं माहिषं वर्जयेद्धृतम्
सहस्रं वा त्रिपादं वा सहस्रार्धमथापि वा  ५१०
उत्तमादिक्रमेणैव प्रधाने होमयेद्गुरुः
दिक्षु विदिक्षु कुण्डेषु पञ्च ब्रह्म षडङ्गकान्  ५११
प्रधाने होमसंख्यया अर्धार्धं होममाचरेत्
प्रोक्तेतरादिदेवानां होममावरणं त्मनाम्  ५१२
प्रधानकुण्डे ज्ञेयं हि शतांशं होमसंख्यया
चतुः खारिं च भारं च खारी द्वौ संगृहेद्धृतम्  ५१३
प्रतिकालं हुनेद्विद्वानुत्तमादि क्रमेण तु
द्विपार्वग्राहि तर्जन्यां बिन्दुरित्यभिधीयते  ५१४
बिन्दुषट्कन्तु कर्षार्धं तद्वयं कर्षकं भवेत्
कर्षद्वयं तु मुष्टिः स्यात्तद्वयं प्रसितिर्भवेत्  ५१५
तद्वयं कुडुपं प्रोक्तं तद्वयं धारणं भवेत्
धारणद्वितयं प्रस्थं द्वात्रिंशाहुतिप्रस्थकम्  ५१६
कर्षपूर्णघृतेनैव एकाहुतिमथाचरेत्
गञ्जलीवाथ माषस्य विंशतिर्धारणाः स्मृताः  ५१७
धारणाष्टफलं वाथ मुष्टिर्वाथ भवेदिह
उक्तान्य चतरचातुष्कं कुडुपं परिचक्षते  ५१८
प्रस्थं तु तच्चतुष्कं स्यात् तच्चतुष्कं तु आढकम्
नवधान्यादिकान् सर्वानाढकेन पृथक्पृथक्  ५१९
द्विप्रस्थं सर्षपं प्रोक्तं तिलमञ्जलिमात्रकम्
एवमेव प्रमाणेन प्रतिकालं हुनेत्क्रमात्  ५२०
कृतं तु व्याहृतिप्रोक्तं पञ्चपक्षमथोच्यते
पूर्वे चाहवनीयाग्निर्दक्षिणाग्निस्तु दक्षिणे  ५२१
पश्चिमे गार्हपत्याग्निः केवलाग्निस्तु चोत्तरे
ईशाने तु शिवाग्निस्तु पञ्चाग्निरिति कीर्तितः  ५२२
प्रधाने व्योममूर्तिः स्याद्वायुमूर्तिश्च पूर्वके
दक्षिणे चाग्निमूर्तिः स्याद्जलमूर्तिश्च सौम्यके  ५२३

क्ष्मामूर्तिः पश्चिमे कुराडे कुराडानां मूर्तिधारकाः
ततो मूर्तीश्वरान् वच्मि प्रधानात् पश्चिमान्तकम् ५२४
पञ्चपक्षे समावाह्य रूपध्यानमथोच्यते
ईशे सदाशिवप्रोक्तं रूपध्यानं च पूर्ववत् ५२५
पञ्चावरणमार्गेण पूजयेद्देशिकोत्तमः
पूर्वकुराडे त्रिणयनमेकवक्त्रं स्मिताननम् ५२६
व्याघ्रचर्मपरीधानं नागयज्ञोपवीतिनम्
शुद्धस्फटिकसङ्काशं चन्द्रार्धकृतशेखरम् ५२७
अक्षमाला त्रिशूलं च खड्गाभीति च सव्यके
बाणं कमराडलुं चाब्जं वरं वामे दधानकम् ५२८
इत्थं ध्यात्वेक्ष्वरं विद्वान् सर्वाभरणभूषितम्
रुद्रं दक्षिणाकुराडे तु भस्मोद्धूळितविग्रहम् ५२९
चतुर्भुजं त्रिणेत्रं च जटामकुटमरािडतम्
माणिक्यानेकवर्णाभं पीतवस्त्रेण वेष्टितम् ५३०
सव्ये व्याख्यानमनलं वामे पुस्तकशूलधृक्
ध्यायेदुत्तरकुराडे तु विष्णुं च नीलसन्निभम् ५३१
एकवक्त्रं द्विनयनं किरीटमकुटोज्ज्वलम्
पीताम्बरधरं शङ्खगदाचक्राब्जधारिणम् ५३२
सर्वलक्षणसंयुक्तं मुक्ताभरणभूषितम्
ब्रह्माणं पश्चिमे कुराडे मौञ्जीदर्भैरलङ्कृतम् ५३३
चतुर्भुजं चतुर्वक्त्रं वक्त्रं प्रतिद्विलोचनम्
पीतवर्णं सुवदनं चित्रवस्त्रसमन्वितम् ५३४
सर्वावयवसंपूर्णं स्त्रग्दराडाक्षकमराडलुम्
एवं मूर्तीश्वराः प्रोक्ता मन्त्रं चैवाधुनोच्यते ५३५
पूर्वे पुरुषहृत्प्रोक्तं याम्ये घोरं शिरस्तथा
पाशौ सद्यंश्च कवचं सौम्ये वामशिखे तथा ५३६
नेत्रास्त्रेशानदेवाः स्युरर्च्याः प्राधान्यकुराडके
पूर्वादिकुराडे द्वौ देवौ वर्णध्यानं च पूर्ववत् ५३७
तत्तत्कुराडे समावाह्य तत्तन्मात्रेण होमयेत्

एवं पञ्चविधं प्रोक्तं शेषं पूर्ववदाचरेत्  ५३८
कल्पयेद्येककुण्डश्चेद्यथावित्तानुसारतः
होमं कुर्याद्विधानोक्तं ब्रह्माङ्गानां दशांशकम्  ५३९
इत्येवं त्रिविधं प्रोक्तं समिद्द्रव्यमिहोच्यते
वारुणेशानपर्यन्तं जिह्वास्थानं प्रकीर्तितम्  ५४०
हिरण्यायां समिद्धोमं मधुदग्धं तथैव च
कनकायां घृतं प्रोक्तं तस्यामेव पयो दधि  ५४१
रक्तायां तु चरुं हुत्वा फलापूपं तथैव च
लाजं हुत्वा तु कृष्णायां नीवारं चणमेव च  ५४२
सुप्रभायां हुनेत् सक्तुनिष्वापमाढकं तथा
यवं हुत्वा तु रक्तायां वेणुं च मुद्गमेव च  ५४३
बहुरूपे तिलं माषं सिद्धार्थगोधुमं तथा
द्रव्याण्यान्यानि सर्वाणि कनकायां हुनेत् क्रमात्  ५४४
कर्षपूर्णेन सर्पिस्तु समिधो द्वादशाङ्गुलम्
कांस्य मृत्ताम्रजां स्थालिं संगृहेद्विधिमानतः  ५४५
प्रस्थाष्टतण्डुलं ग्राह्यं देशिकस्तु पचेत् चरुम्
विधिपक्वं तदन्यद्वा ग्रासमात्रेण तद्धुनेत्  ५४६
विध्यपक्वचरुं होमं कुर्यात्संपादसंस्कृतिः
इन्धनानि क्षिपेदग्नौ कुब्जहस्तेन लाजकम्  ५४७
पृथुकं धानुकं सक्तुमुष्टिमात्रेण होमयेत्
गो धूमं वैणवं चैव नीवारं शुक्तिमात्रतः  ५४८
निष्पावं नवभिः प्रोक्तं चणं दशभिरेव च
पञ्चाङ्गुल्या हुनेद्धीमानाढकं लाजमाषकम्  ५४९
कुलुत्थं माषमुद्गौ च प्रियङ्गुश्यामकं तथा
शुक्तिमात्राहुतिं हुत्वा शुद्ध्यर्थं यवसर्षपम्  ५५०
हुत्वा तिलं मृगी मुद्रा द्रव्यान्ते व्याहृतिं हुनेत्
पञ्चान्तोत्थाय चैवोक्तं चाढकं च पृथक्पृथक्  ५५१
तत्तद्द्रव्योक्तमानेन तण्डुलं च क्रमात्पचेत्
अग्नौ द्रव्यं हुनेद्धीमान् शुद्धान्नं मुद्गमन्नकम्  ५५२

क्षीरान्नं कृसरान्नं च गुळान्नं चाक्षमात्रतः
स्वप्रमाणान्यपूपानि चतुःकृत्वाऽथवा हुनेत् ५५३
पयो दधि मधुक्षीरं क्रुरेक्षुजन्मवस्तुनी
स्रुवपूर्णाहुतिं हुत्वा पुन्नागफलद्गुळम् ५५४
इक्षुसर्पविशालेन कदल्यार्धेन होमयेत्
हुत्वा चूतं स्वप्रमाणैर्भित्वाष्टौ नाळिकेरकम् ५५५
लिकुचं स्वप्रमाणेन कण्डकान् त्वक्विसृज्य च
त्रंशदंशेन भागेन भित्वा तु फनसं हुनेत् ५५६
कवलं सूरणं बालं पद्मकन्दं च नीलकम्
विभीतिफलमात्रेण कन्दं भित्वा तु होमयेत् ५५७
चन्द्रणं चणमात्रेण ततो मृगमदद्वया
चन्द्रकुङ्कुमकाश्मीरकस्तूरीकृष्णगन्धकान् ५५८
माषवत् गुद्गुलं धूपं बदरीफलवद्धुनेत्
उशीरं जलपिङ्गं च मरुद्दमनतालकम् ५५९
द्व्यंगुलं लतानां च श्रीपत्रं च सुपुष्पकम्
जातीफलं च ताम्बूलमेलालवङ्गसंयुतम् ५६०
करेण च हुनेद्द्रव्यं स्रुवपूर्णेन व्याहृतिः
स्रुचावटेन सम्पूर्णं पूर्णाहुतिमथाचरेत् ५६१
पलाशं सद्यमन्त्रेण मूलेनाज्यं तु होमयेत्
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु ५६२
सक्तुश्च वाममन्त्रेण ईशेन धानकं हुनेत्
समिद्द्रव्याणि सर्वाणि पूर्वं हुत्वा प्रधानके ५६३
पश्चात्पूर्वादिकुण्डेषु होमशेषं ततो हुनेत्
हुत्वा ईशस्य निष्पावं अपामार्गं प्रधानके ५६४
गोधूमाश्वत्थपूर्वे तु याम्ये तिलमुदुम्बरम्
आढकं च वटं सौम्ये प्लक्षमुद्गं च पश्चिमे ५६५
शमी सर्षपमग्नौ तु ऐशान्यामर्कमाषकम्
खादिरं शालि नैर्ऋत्यां वायव्यां चणबिल्वकम् ५६६
नेत्रस्याम्रं च नीवारं शिवकुण्डे हुनेद्बुधः

अस्त्रस्य वैणवं दूर्वा तथा वा शिवकुण्डके ५६७
दिक्षु विदिक्षु कुण्डेषु तन्मन्त्रेण होमयेत्
समिदाज्यचरून् लाजान् दिग्द्रव्यं च समानकम् ५६८
अन्यद्रव्याणि सर्वाणि न्यूनेवाप्यधिकेऽपि वा
यथासंभवमानेन होमयेद्देशिकोत्तमः ५६९
ईशाने यवधान्यं च मूलेन राजमाषकम्
शिखायां श्यामकं हुत्वा प्रियङ्गुं च कुळुत्थकम् ५७०
अघोरेण तु पञ्चान्नमपूपं शिरसा हुनेत्
नेत्रेण पायसं हुत्वा दुग्धमीशानहोमयेत् ५७१
दधि तत्पुरुषेणैव मधू च वाममन्त्रतः
गुळं चाघोरमन्त्रेण मूलेन इक्षुदण्डकम् ५७२
ईशानेन फलादीञ्च कन्दादीन्मूलमन्त्रतः
मूलेन चन्दणं चैव कस्तूरीकृष्णागन्धकम् ५७३
गोरोचनाश्च काश्मीरं कुङ्कुमं मृगनाभिकम्
हिमतोयं च कर्पूरं सर्वं च जुहुयात् क्रमात् ५७४
बीजमुख्यैश्च ह्रीबेरमुशीरं मरु गुग्गुलम्
दशाक्षरेण पुष्पाणि बिल्वं पाशुपतेन च ५७५
अघोरेण तु ताम्बूलं वसनाद्रव्यसंयुतम्
अन्यानि होमयोग्यानि मूलेनैव तु होमयेत् ५७६
द्रव्यं प्रति विशेषेण व्याहृतिं च पुनःपुनः
पूर्वादि वायुकुण्डान्तं होमकर्म समाप्य च ५७७
पूर्णाहुतिं ततः कृत्वा व्याहृत्या च हुनेत्क्रमात्
धूपदीपौ ददेत्पश्चात्तदन्ते मेखलात्रये ५७८
तत्तत्स्वनाममन्त्रेण लोकेशादिबलिं क्षिपेत्
कुण्डपार्श्वेषु सर्वेषु सदक्षे बलिमाचरेत् ५७९
पुरुषादि वायुकुण्डान्तमन्तर्बाह्ये बलिं क्षिपेत्
नाडिसन्धानमार्गेण तत्तत्कुण्डाधिदेवताः ५८०
कुशाक्षतेन पुष्पेण संग्राह्यं देशिकोत्तमः
शिवकुण्डगताग्निस्थां शिखे संयोजयेत्ततः ५८१

सर्वातोद्यसमायुक्तं वेदघोषसमन्वितम्
महापूर्णाहुतिं हुत्वा व्याहृतिं जुहुयात्ततः ५८२
प्रदर्श्य धूपदीपादीनन्तर्बाह्यवलिं ददेत्
श्रोत्राभिवन्दनं कृत्वा हंसं रक्षो पदे त्वया ५८३
सकळीकरणं कृत्वा जपं कृत्वा समर्पयेत्
तत्तत्कुण्डगताग्निं च तत्तत्कुण्डेषु रक्षयेत् ५८४
अथवाग्निं च संग्राह्य शिवकुण्डे नियोजयेत्
उत्थाने आसने क्रोधे क्षुधे निष्पीवनक्रमे ५८५
वायुचारे भयोत्पन्ने भाषाणे चाप्यदिक्षते
श्येनोद्गारे च सन्तापे क्रिया विस्मृति संभवेत् ५८६
मन्त्रोक्तमन्त्रकार्येषु व्याहृत्याहुतिमाचरेत्
ततो कुम्भान्तिकं गत्वा वेद्यादक्षिणभागतः ५८७
पुष्पाञ्जल्या पूजयित्वा तत्वतृतयमन्त्रतः
धूपदीपौ ददेत् पश्चान्महानैवेद्यमाचरेत् ५८८
चतुर्हस्तं तथा पात्रं चतुष्पात्रं तु प्रस्थकम्
आढकं तच्चतुष्कं स्याद्द्रोणं +++ चतुष्ककम् ५८९
द्विद्रोणादष्टद्रोणं च नित्यमेवं विधीयते
नैमित्त्यमष्टद्रोणं तु भारं च द्वादशान्तकम् ५९०
प्रस्थितं यैस्तु संख्याभिः तैस्संख्याभिस्तु काम्यकम्
एवं क्रमेण नैवेद्यं दापयेद्देशिकोत्तमः ५९१
हविश्च षड्विधं ज्ञेयं पायसं शुद्धमन्नकम्
गुळान्नं कृसरान्नं च दध्यन्नं मद्गमन्नकम् ५९२
प्रतिद्रव्येण संयुक्तं आढकद्वयतण्डुलैः
अनेकव्यञ्जनैर्युक्तं अपूपादिसमन्वितम् ५९३
व्रीहिरेकफलं चैव शालिर्दशगुणं भवेत्
प्रियङ्गुशतसंप्रोक्तं नीवरन्तु सहस्रकम् ५९४
गोधूमन्तु भवेल्लक्षमनन्तं वैणवं भवेत्
भक्ष्यं भोज्यं च पेयञ्च लेह्यं शोष्यं च पञ्चधा ५९५
नानाफलैश्च संयुक्तं पानीयैश्च समन्वितम्

स्थलिकं क्षाळनं कृत्वा नैवेद्यं च प्रपूरयेत्  ५९६
व्यञ्जनैरावृतं चैव पूरयेदन्नतोपरि
पिधाय शुद्धवस्त्रैश्च पाचकोपरि धारयेत्  ५९७
वाद्यघोषसमायुक्तं यागशालां प्रवेशयेत्
शिवाग्रे स्थापयित्वा तु अम्बुना प्रोक्षयेत्ततः  ५९८
देवस्य त्वेति मन्त्रेण नैवेद्यं दापयेत्ततः
सुपादिव्यञ्जनान्तं तु उपचारान् समाचरेत्  ५९९
मन्त्रपुष्पादिना सर्च्या दद्याद्देशिक भस्म च
त्रिकालं चान्नलिङ्गं च नित्योत्सवादि कर्म च  ६००
नित्यहोमादिकार्यं च भोगालयनिवेशनम्
सर्वा नित्योत्सवं कुर्यात् शिवयागस्य मण्डपे  ६०१
तीर्थं नैमित्तिकं चैव शिवयागे विवर्जयेत्
अङ्कुराद्यभिषेकान्तं मध्याह्ने भोजयेद्द्विजान्  ६०२
सहस्राद्ययुतपर्यन्तं यथावित्तानुसारतः
सर्वदोषनिवृत्त्यर्थं कुर्याद्ब्राह्मणभोजनम्  ६०३
भक्तितस्सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम्
एकरात्रमथो सद्यः कुर्याद्दिवाभिवासनम्  ६०४
होतव्यं प्रत्यहं स्वस्वमन्त्रेण पूजयेच्छिवम्
एवमेवं विधानेन सायं प्रातर्दिने दिने  ६०५
इत्येवं पूजयेद्रात्रौ प्रभाते विमले सति
स्नात्वा गुरुविधानेन नित्यकर्म समाचरेत्  ६०६
यागशालां प्रविश्याऽथ ऋत्विग्भिः परिचारकैः
विघ्नराजं च संपूज्य सङ्कल्पं च ततः परम्  ६०७
पुण्याहं पञ्चगव्यं च कुम्भं संस्थापयेद्गुरुः
द्वारादिगुरुपूजां च पूर्ववत्पूजयेत्क्रमात्  ६०८
शिवकुम्भान्तिकं गत्वा पाद्यादि स्थापयेद्गुरुः
निर्माल्यं च विसृज्याऽथ कल्पयेत्स्थिरमासनम्  ६०९
मूर्तिध्यानं च विन्यस्य मूलेनावाह्य देशिकः
पाद्यादि धूपदीपौ च ताम्बूलादिं निवेदयेत्  ६१०

दर्पणे वाऽथ कूर्चे वा कल्पयेच्चलमासनम्
तैलादि कुम्भपर्यन्तमभिषेकं समाप्य च ६११
तन्मूर्तिं योजयेत्कुम्भे गन्धमाल्यैश्च धारयेत्
मन्त्रो दानं च ताम्बूलं दापयेद्धूपदीपयुक् ६१२
होमं कुर्याद्विधानेन पश्चान्नैवेद्यमाचरेत्
पूर्वोक्तविधिमार्गेण उपचारान् समाप्य च ६१३
पुण्याहमभिषेकं च द्वाराद्यर्चनपूर्वकम्
द्विकाले कारयेदेवं अन्यकाले विधीयते ६१४
निर्माल्यं च विसृज्याऽथ नैवेद्यं धूपदीपयुक्
अहन्यहनि संपूज्य निर्दिष्टदिवसावधि ६१५
पश्चाद्गर्भगृहं प्राप्य सामान्ययजनं कुरु
अष्टबन्धनकाले तु नन्द्यावर्तविहीनके ६१६
स्थलकर्मणि विश्लिष्टे सुधाकर्मविहीनके
क्षणकाले गृहीत्वा तु पुनस्सन्धानमाचरेत् ६१७
त्रिपञ्चदिवसस्नानं भागं चेच्छवलिङ्गके
तावत्पूजादिकं सर्वं पूजयेत्तु शिवाध्वरे ६१८
मूललिङ्गे विशेषेण शान्तिहोमसमन्वितम्
शान्तिकुम्भाम्भसा प्रोक्ष्यार्चयेद्देशिकोत्तमः ६१९
निर्दिष्टदिवसात्पूर्वे सायं होमावसानके
मूललिङ्गान्तिकं गत्वा शोधयेद्देशिकोत्तमः ६२०
पीठांशं षोडशं कृत्वा चैकांशं नवरत्नकम्
दशांशं सिकतैर्युक्तं पञ्चांशं बन्धयेत्क्रमात् ६२१
त्र्यङ्गुलप्रमाणेन स्वर्णेन चतुरङ्गुलम्
विलिखेच्छिवबीजेन मध्यरन्ध्रावटे क्षिपेत् ६२२
माणिक्यं मध्यमे न्यस्य शक्रे मरकतं न्यसेत्
इन्द्रनीलं तु याम्ये च स्फटिकं वरुणं न्यसेत् ६२३
वज्रं तु सौम्यदिग्भागे वैडूर्यमग्निगोचरेत्
मौक्तिकं नैर्ऋतौ देशे पद्मरागं तु मारुते ६२४
प्रवाळमीशदेशे तु चतुस्संस्कारपूर्वकम्

मूलमन्त्रेण संपूज्य षडुत्थासनमर्चयेत् ६२५
मुकुळीपद्ममुद्रां च शोधिनीं च प्रदर्शयेत्
मध्यादीशानपर्यन्तं विन्यसे मूलमन्त्रतः ६२६
पूरयेत्सिकतैश्शुद्धैः लिङ्गपीठे दृढीकृते
प्रासादस्याग्रके याम्ये पावके वान्यदेशके ६२७
गोमयेनोपलिप्याऽथ चतुरश्रं द्वयं ततः
स्थण्डिलं तत्र कर्तव्यमष्टपत्रं सकर्णिकम् ६२८
नवपात्रसमायुक्तमथवा चैकपात्रकम्
पुण्याहं वाचयेत्तत्र सर्वद्रव्याणि प्रोक्षयेत् ६२९
नैवेद्यं गन्धपुष्पं च धूपदीपसमन्वितम्
अष्टद्रव्याणि संपूज्याष्टविद्येश्वरान्यसेत् ६३०
पञ्चमं पञ्चमूर्तिं च त्रिद्रव्यं च त्रिमूर्तिकम्
एतत्तन्मूलमन्त्रेण द्रव्याणि चाभिमन्त्रयेत् ६३१
अर्चयित्वा यथोक्तेन कर्तव्यं स्थण्डिलोपरि
उलूखलं च मुसलं प्रोक्षयेच्छुद्धवारिणा ६३२
षडुत्थासनमभ्यर्च्य तस्योपरि निधापयेत्
उलूखलं ब्रह्मदैवत्यमुसलं विष्णुदैवतम् ६३३
वस्त्रैर्दर्भैरलङ्कृत्य उलूखं मुसलस्य च
गन्धपुष्पादिनाभ्यर्च्य धूपं दीपं ददेद्बुधः ६३४
परिचारौ समाहूय सोष्णीषौ चोत्तरीयकौ
उलूखलस्य तन्मध्ये तद्द्रव्यं निक्षिपेद्गुरुः ६३५
मुसलं हस्तके दत्त्वा ताडयेत् सुदृढं पुनः
सम्यक् संकुट्य मुसलैस्सुपक्वं वीक्ष्य बुद्धिमान् ६३६
अग्निबीजमनुस्मृत्य लिङ्गपीठान्तरे क्षिपेत्
पूजांशषोडशं कृत्वा एकांशमष्टबन्धनम् ६३७
तन्मानं पदविस्तारमष्टबन्धन्तु कारयेत्
यागशालां पुनर्गत्वा प्रायश्चित्तं हुनेत्क्रमात् ६३८
शिल्पस्पर्शादिदोषाय स्थापयेच्छान्तिकुम्भकम्
प्रज्वाल्य शिववह्नौ तु शान्तिमन्त्रशतं हुनेत् ६३९

दर्भमूले तु वल्मीके क्षेत्रमृद्ग्राह्यकर्कटे
वृषशृङ्गे बिल्वमूले नदीमृद्गजदन्तके ६४०
अष्टमृद्ग्राह्यते धीमान् भाण्डमेकं निधापयेत्
अश्वत्थमाम्रजम्बू च वटमौदुम्बरं तथा ६४१
पञ्चत्वक् च समाख्यातं भाण्डमेकं निधापयेत्
पालाशोदुम्बराश्वत्थो जम्बूवटसपल्लवम् ६४२
पञ्चपल्लवमाख्यातं पात्रमध्ये विनिक्षिपेत्
बिल्वं कपित्थनिर्गुण्डि सरळीवारणं तथा ६४३
पञ्चबिल्वमिति ख्यातं पात्रमेकं निधापयेत्
विधिवत्पञ्चगव्यं च स्थापयेद्देशिकोत्तमः ६४४
व्रीहिं तदग्रे निक्षिप्य तिलतण्डुलसंयुतम्
तत्तत्कुम्भान्न्यसेद्धीमान् सूत्रपल्लवसंयुतान् ६४५
षडुत्थासनमभ्यर्च्य संहितां पूजयेत्क्रमात्
व्योमव्यापि जपेत्तत्र धूपदीपौ ददेद्गुरुः ६४६
निक्षिपेत्तण्डुलं पात्रे कौतुकं द्वयसंयुतम्
भसितं नाळिकेरं च ताम्बूलं च समन्वितम् ६४७
क्रमेण द्रव्यानभ्यर्च्य कौतुकेष्टफणिन्यजेत्
संपातं च हुनेद्विद्वान् वाद्यघोषसमन्वितम् ६४८
ब्रह्मघोषसमायुक्तं शिवलिङ्गान्तिकं भजेत्
तैलाभ्यङ्गं तथा देवे कुर्याद्देवान्विशेषतः ६४९
पञ्चगव्येन संस्नाप्य लिङ्गपीठान्तरं क्रमात्
अष्टमृत्सलिलैश्चैव काषायैश्चाभिकुम्भकैः ६५०
पञ्चपल्लवबिल्वैश्च प्रत्येकमभिषेचयेत्
चन्दनाद्यै त्रिलिप्याऽथ रक्षासूत्रं च बन्धयेत् ६५१
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत्
गर्भगृहं ततः प्राप्य पुण्याह प्रोक्षणं क्रमात् ६५२
व्यपो भ्योषितपुष्पाणि कौतुकं वस्त्रसंयुतम्
अभिषेकं ततः कुर्यादुपचारैः प्रपूजयेत् ६५३
अध्वष्ट्यूकं च विन्यस्य अष्टत्रिंशत् कला न्यसेत्

मन्त्रं न्यासं ततो न्यस्त्वा धूपदीपादिकं यजेत्  ६५४
यागशालां पुनः प्राप्य ऋत्विग्भिः परिचारकैः
यागपूजाप्रकारेण शिवं साङ्गं प्रपूजयेत्  ६५५
अग्निं प्रज्वाल्य संपूज्य होमं पूर्ववदाचरेत्
प्रायश्चित्तं पुरा कृत्वा जयादि जुहुयात्ततः  ६५६
भूरादिभिश्च शिरसा पूर्णां हुत्वा विधानतः
धूपदीपौ ददेत् पश्चात् अन्तर्बाह्ये बलिं क्षिपेत्  ६५७
श्रोत्राभिवादनं कृत्वा वर्मणा परिधि दहेत्
विष्टराणि समादाय मुक्त्वा ग्रन्थिं विसर्जयेत्  ६५८
दर्भास्तरणमादाय घृतेन सेचनं दहेत्
भसितं संगृहीत्वा तु धारयेत्तु ललाटके  ६५९
सकलीकरणं कृत्वा पश्चात् जपं समर्चयेत्
नाडीसन्धानमार्गेण कुण्डाद्देवं समाहरेत्  ६६०
कुम्भे संयोजयेद्विद्वान् धूपदीपादिसंयुतम्
अग्निं विसर्जयेत्पश्चात् अस्त्रकुम्भं च वर्धनीम्  ६६१
द्वारपालादिलोकेशान् विसृजेत्सकलानपि
सुमुहूर्ते च संप्राप्ते यात्रादानं प्रदापयेत्  ६६२
गोभूतिलहिरण्याज्यवासोधान्यगुडानि च
रौप्यं लवणमित्याहुर्दश दानाः प्रकीर्तिताः  ६६३
कन्निकां चोपनीतां च भस्मरुद्राक्षलिङ्गकान्
अन्यानि शास्त्रयुक्तानि तत्काले तु प्रदापयेत्  ६६४
आचार्यं पूजयेत्पश्चाद् वस्त्रा भरणकुण्डलैः
शय्यां तु वाहनं दासीः रत्नानि विविधानि च  ६६५
सुभिक्षां वसुधां चैव सवत्सां गां तथैव च
एतानि गुरवे दद्यात् पश्चात्ताम्बूलदक्षिणाम्  ६६६
उत्तमं त्रिंशनिष्कं च मध्यमं विंशतिर्भवेत्
अधमं दशनिष्कं स्यादाचार्याय च दक्षिणाम्  ६६७
आचार्यार्धं साधकाय तदर्धं वास्तुहोमके
ऋत्विजानां च सर्वेषां जनं प्रति पृथक्पृथक्  ६६८

दद्याद्द्रव्यं तदर्धं च तत्समा शिल्पिदक्षिणाम्
तदर्धं मन्त्रजप्तानां तत्समा वेदपालिने ६६९
दैवज्ञाय समं दद्यात्तथा पौराणिकाय च
स्थानीनां परिचाराणां यथाश्राद्धानुदक्षिणा ६७०
गीतवाद्यकनृत्तानां दासीनां तु तथैव च
अन्येषां शिवभक्तानां प्रीतिं कुर्याद्विशेषतः ६७१
भूरिदानं विशेषेण क्रमेण कुरुते गुरुः
आचार्यमनसे तुष्टिः दैवसन्तोषकारणम् ६७२
आचार्यमनसे कोपः देवताकोपमेव च
तस्मात्सर्वप्रयत्नेन आचार्यं तोषयेत्प्रभुः ६७३
समिद्धारसहस्राणि घृतकुम्भशतानि च
दक्षिणाहीनकर्माणि कर्मनाशकराणि च ६७४
आचार्यो मन्त्रहीनं स्यात् क्रियाहीनं तु शिल्पिनः
दाता च द्रव्यहीनं स्यात् त्रिवर्गकुलनाशनम् ६७५
एवं तु विधिवत् कुर्याद्यथावित्तानुसारतः
वित्तशाठ्येन यः कुर्यात् कर्ता भर्ता विनश्यति ६७६
तस्माच्छास्त्रोक्तमार्गेण यथावित्तानुसारतः
आहूय देशिकौ विप्रौ दीक्षानिर्वाणसंयुतौ ६७७
भस्मरुद्राक्षसंयुक्तौ शिरोवस्त्रसमन्वितौ
प्रधानकुम्भमुद्धृत्य वर्धनीं च शिरोपरि ६७८
अष्टकुम्भान् समुद्धृत्य परिचारशिरस्य च
आचार्यो हस्तकूर्चेन स्पृश्य मूलं जपेत् गुरुः ६७९
मनसा शिवमन्त्रं च ध्यायेद्गर्भगृहावधि
वाद्यघोषसमायुक्तं छत्रचामरसंयुतम् ६८०
वेदध्वनिसमोपेतं स्तोत्रं मङ्ळवाचकैः
भङ्ग्या प्रदक्षिणं कृत्वा सर्वभक्तजनैः सह ६८१
धूपदीपौ पुरा कृत्वा पुष्पलाजान् प्रसारयेत्
पादात्पादान्तरं गत्वा द्वारदेशं प्रवेशयेत् ६८२
अर्घ्यं दत्वा तु ताम्बूलं नीराजनं ततः परम्

लिङ्गाग्रे शालिना कल्प्यं स्थरिडलं चतुरश्रकम्  ६८३
क्रमात्कुम्भान्सुसंस्थाप्य प्रसन्नात्मगुरुस्ततः
सकलीकरणं कृत्वा पुरायाहं प्रोक्षणं कुरु  ६८४
आसनं मूर्ति विन्यस्य अष्टत्रिंशत्कलान्वितम्
ध्यात्वा सदाशिवं लिङ्गे पुष्पमादाय बुद्धिमान्  ६८५
कुम्भाद्बीजं समादाय लिङ्गस्य मूर्ध्नि विन्यसेत्
वर्धनीं बीजमादाय पिरिडकायां सुयोजयेत्  ६८६
अष्टविद्येश्वरान् कुम्भे तत्तत्स्थानेषु योजयेत्
शिवकुम्भं समुद्धृत्य शिवलिङ्गेऽभिषेचयेत्  ६८७
तत्तत्स्थानेऽभिषिच्याथ मन्त्रान्तं च निवेदयेत्
पञ्चामृतादिस्नपनैरभिषेकं यथाक्रमम्  ६८८
वस्त्राभरणसंयुक्तं सर्वाङ्गगन्धलेपनम्
सर्वपुष्पैरलङ्कृत्य महाहविर्निवेदयेत्  ६८९
धूपदीपसमायुक्तं शिवं प्रार्थ्य गुरूत्तमः
ब्रह्मघोषसमायुक्तमाशीर्वादं तु कारयेत्  ६९०
महाभिषेकं कर्तव्यं महानैवेद्यमेव च
सोमास्कन्दादिमूर्तीनामुत्सवं कारयेत्ततः  ६९१
अपरे दिवसे धीमान् नित्यस्नानादिकं कुरु
स्नपनं तत्र कुर्वीत अष्टोत्तरसहस्रकम्  ६९२
अष्टोत्तरशतं वापि शान्तिहोमं समाचरेत्
त्रिपक्षं च द्विपक्षं वा पक्षमेकं यजेत्क्रमात्  ६९३
शान्तिहोमं हुनेन्नित्यमेकादशपरायणम्
ब्राह्मणान् भोजयेत्पश्चाद्यथाविभवविस्तरम्  ६९४
एवमेव प्रकारेण प्रसन्नं पूजयेच्छिवम्
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः  ६९५
मोक्षार्थी लभते मोक्षं प्रजार्थी लभते सुतम्
अर्थार्थी चार्थमाप्नोति जयार्थी जयमाप्नुयात्  ६९६
इह लोके सुखं प्राप्य सोऽन्ते सायुज्यमाप्नुयात्  ६९७

इति सहस्रतन्त्रे क्रियापादे अष्टबन्धनविधिः समाप्तः

## अमृतेश्वरी

ध्यानमस्य प्रवक्ष्यामि शृणुष्वायत लोचने
अमृतेनान्तु पूर्णान्तु श्वेतपद्मोपरि स्थिताम् १
रत्नसिंहासनां देवीं तन्मध्येऽमृतमण्डले
चतुर्भुजां त्रिणेत्राञ्च शङ्खकुन्देन्दु सन्निभाम् २
पीनोन्नतकुचोरस्कां श्वेतामिन्दु मुखाम्बुजाम्
वरदाभयहस्ताभ्यां श्वेतपङ्कजधारिणीम् ३
श्रुतिस्मृताश्च बिम्बोष्ठीं मुक्ताभरणभूषिताम्
मौक्तिमाणिक्यवैडूर्य ख्येतकळकाञ्चिताम् ४
रत्न ++++ मण्डलमण्डिताम्
विचित्र रत्नवलयां विचित्रवलयां शिवाम् ५
रत्नसिंहासनां देवीं तन्मध्येऽमृतमण्डले
ध्यात्वाऽमृता क्षरेणैव तन्मध्येऽमृतमण्डले ६
शान्तां पद्मासनस्थां हरिहरजननीं पञ्चवक्त्रां त्रिणेत्रां
शूलं च वज्रञ्च खड्गं परशुमभयदंसव्यभागे वहन्तीम् ।
रागं पाशञ्च घण्टा मनलकरमपि दक्षिणे धारयन्तीं
आद्यादङ्गानि संयज्वलितशिखिनिभां पद्मपत्रायताक्षाम् ७

## रथसंप्रोक्षणविधिः

रथसंप्रोक्षणं वक्ष्ये शृणुष्वेवं जनार्दन
प्रतिसंवत्सरादूर्ध्वं भ्रामयन्न च रोधनम् १
अग्निदग्धे च चण्डाले स्पर्शने अशुचिस्थिते
यानकाले तु पतिते स्फोटने भ्रमणेषु च २
चर्मरज्जुसुसंबन्धे दण्डवत्पतितो भुवि
पञ्च सप्तनवाहेषु रथारोहण शं भवेत् ३
रथे च पूर्वदिग्भागे पश्चिमे यागमर्चनम्
अंकुरं पूर्ववत्कृत्वा तदूर्ध्वे मण्डलत्रयम् ४
नालिकेरदलोपेतं मण्टपं चतुरश्रकैः
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ५

तन्मध्ये वेदिकाशाली तिलतण्डुलसंयुतम्
लाजैः पुष्पैः परिस्तीर्य दर्भकूर्चे च विष्टरम् ६
दलाष्टकसमोपेतं तन्मध्ये शिवकुम्भकैः
द्रोणत्रयजलं कुम्भं शिवपूर्णन्तु वर्धनी ७
दलाग्रेष्वष्टकलशैः चूतपल्लवकूर्चकैः
चतुर्द्वारसमोपेतं पूर्व ++++++ ८
++ येत्कलशे वस्त्रं इन्द्रादीशानदैवतम्
सौम्ये पाशुपतं कुम्भं स्थापयेत्कर्करी सह ९
वेदिके पश्चिमे भागे स्थण्डिलेष्टदलैर्युतम्
सौम्यदक्षिणमध्यस्थैः लेखने मध्यमेव च १०
अभिधानादि सर्वेषां अलंकृत्य शिवद्विजैः
रथवास्तु हुतिं मध्ये शुद्ध्यर्थन्तु शताहुतिम् ११
पर्यग्निकरणं कृत्वा भ्रामयेत्त्रिविधं परम्
सामान्यार्घ्यं सुसंकल्प्य करन्याससमन्वितम् १२
पू ++++++++ येद्वसुपालकैः
मण्डलं दक्षिणे भागे भूतशुद्ध्यादिमाचरेत् १३
तदूर्ध्वे त्रितयं कुम्भं विशेषार्घ्यसमन्वितम्
ब्रह्मविष्णुहरायान्तु तत्तद्वर्णस्वरूपयुक् १४
गन्धपुष्पादिरभ्यर्च्य धूपदीपसमन्वितम्
आसनं मध्ये कुम्भेऽऽधाराख्यमनन्तकम् १५
पद्मकेसरकन्दाद्यैः अर्चयेत्कुम्भमूर्ध्निषु
मोहिनीमूर्ध्वतच्छक्तिं भावये ++++ १६
ऐशान्ये कर्करीं मूर्तिं शान्त्यादि शक्तिसंयुतम्
पूजयेद्धूपदीपञ्च चरुन्नैवेद्यमेव च १७
पूर्वादिकलशैरष्ट धर्मादिरष्टमूर्तिषु
गन्धपुष्पञ्च धूपञ्च +++ निवेदितम् १८
होमयेत्पूर्वदिग्भागे मण्डले स्थण्डिलेऽपि वा
पञ्चसंस्कारमार्गेण होमयेत्तु चतुश्शतम् १९
शुद्धतैले मुखं द्रोणैः दाहनाप्लावनं तथा

तैले च +++ इति हुनेत् सुधीः २०
शेवतैलेन मर्दन्या मूलाग्रं मध्यमे रथाम्
पुरायाह प्रोक्षरणं कृत्वा वृक्षतैलेन वर्जयेत् २१
वृक्षतैलस्य मर्दन्यां राष्ट्रस्य कलहं भवेत्
शुद्धतैलेन निर्मृज्य राजराष्ट्रसुखप्रदम् २२
पञ्चगव्येन संप्रोक्ष्य पञ्च भूतानि शोद्ययेत्
रथन्यासविधिञ्चैव शृणुष्वेवं जनार्दन २३
शकटे चन्द्रसूर्यस्य द्वादशादि +++
+++ ध्व ब्रह्मभागेनाऽऽवाहनविधिस्तथा २४
विष्णुभागे न्यसेद्विष्णुं पूर्वोक्तविधिना सह
तदूर्ध्वे विन्यसेद्रौद्रे द्वात्रिंशत् प्रतिमार्चयेत् २५
कलारूपमधिष्ठानैरर्चये +++ वे द्विजैः
धूपदीपं हृदा दत्वा वेदघोषैरलंकृतम्
अधिष्ठानेसु मध्यस्थे शिवासनाय चतुष्टयम् २६
धर्मज्ञानञ्च वैराग्यं चतुर्दिक्षु विदिक्षुकैः
अर्चयेद्धूपदीपञ्च +++ न्वितैः २७
पाशुपतेन कुम्भञ्च वीथिका प्रोक्षरणञ्च तु
इन्द्रादिलोकपालाद्यैः तत्तत्स्थाने रथस्य वा २८
ब्रह्मकुम्भं समुद्धृत्य शकटाग्रेऽभिषेचयेत्
विष्णुकुम्भं प्रतिष्ठाप्य तद्भागे योजयेद्विजैः २९
रुद्रेण रुद्रभागस्याऽभिषेकं जनार्दन
प्राधान्ये दशसंहृत्य मध्यमे मध्यमे न्यसेत् ३०
कर्करी सव्यभागे चाऽभिषेकं विधीयते
धर्मादीनि यथास्थान +++ भिषेचनम् ३१
मार्जनं हस्तसंयुक्तमर्चयेदुक्तपूर्ववत्
षडाधारे षडध्वा च भावयेद्देशिकोत्तमः ३२
नैवेद्य मनसौ मन्त्रं कैलासं त्रिदशेश्वरम्
त्रिंशत्त्रिकोटिदेवानां रथाग्रे मध्यमूर्ध्निषु ३३
भावयेत्परमे चार्चे तन्मूले बन्धयेत्कदम्

कदम्बेन समभ्यर्च्याऽष्टचक्रं न्यसेत्तथा  ३४
सर्वघोषैरलंकृत्य चित्रदामैश्च मकुटवत्
सोमां ++ त्तं चन्द्रचेखरमेव च  ३५
संमुखे देवदेवीनां आरोप्यदेशिकैर्युतम्
देवदक्षिणदिग्भागे रुचिरासनसंस्थितम्  ३६
मूलमन्त्रमनुस्मृत्य दशमेकमनुं जपम्
विष्णुभागे न्यसेत्प्रोक्तं स्थानाचार्यसमन्वितम्
तदूर्ध्वे नर्तकारूपं सर्वलक्षणसंयुतम्  ३७
विन्यसेदन्यथा स्थाप्य तत्कर्ता नरकं व्रजेत्
अथवा जनमारोप्य राजराष्ट्रं विनश्यति  ३८
++ द ++ न्यथा कृत्वा पुनरुत्सवमाचरेत्
तद्ग्रामे ज्वररोगादि परचक्राद्भयं नृपम्
तत्कर्ताशीघ्रं नश्यति त्रिमासेन त्रिवर्षके  ३९
प्रायश्चित्तविधिर्नास्ति पुनरुत्सवमाचरेत्
पूर्वोक्तसंख्यमारोप्य राजराष्ट्रसुखप्रदम्  ४०
पूर्ववत्स्थानमाश्रित्य नित्यपूजां समाचरेत्
मध्याह्ने पूर्वमाश्रित्य शान्तिहोमं समाचरेत्  ४१
मध्याह्ने तु समाश्रित्य मूर्तिहोमं समाहुनेत्
सन्ध्या तत्कालमाश्रित्य दिशाहोमं सहस्रकम्  ४२
अर्धरात्रेण संश्रित्य होमयेत्त्रिविधास्य च
अपरं दिनमाश्रित्य तन्मूले लक्षणाहुतिम्  ४३
आचार्य दक्षिणां दद्यात् वस्त्रहेमाङ्गुलीयकैः
साम्राज्यं सम्पदं प्राप्य शिवसायुज्यमाप्नुयात्  ४४
रथप्रोक्षणमित्युक्तं स्थापनं वक्ष्यते रथम्  ४५

इति सहस्रतन्त्रे क्रियापादे रथसंप्रोक्षणविधिः

## यन्त्रशुद्धिविधिः

यन्त्रशुद्धिविधिं वक्ष्ये शृणुष्वैवं जनार्दन
चण्डरूपञ्च सर्वेषां स्थापनं वक्ष्यते शृणु  १

ऋषभं नागभूतेषु हंसराक्षसमेव च
शिबिको वाजिसंयुक्तं निर्मितं वर्णभिः सह  २
अङ्कुराणयर्पयेत्पूर्वं नयनोन्मीलनं तथा
मराडपं पञ्चहस्तञ्चैकाग्निं वा विशेषतः  ३
एकाग्निं योनिकुराडेषु अलंकृत्य सुशालयेत्
आस्थानमराडपोत्कर्षं अन्यथा वर्जयेद्गृहे  ४
पुरायाह प्रोक्षणं कृत्वा शालितराडुलनिर्मितम्
दलाष्टकसमा युक्तं दर्भैः पुष्पैः परिस्तरेत्  ५
सौम्यदक्षिणतन्मध्ये त्रिकुम्भं विन्यसेत्त्रिधा
कलशाष्टसमोपेतं दर्भकूर्चोपविष्टरम्  ६
रक्तवस्त्रञ्च पुष्पाद्यैः अर्चयेद्धुपदीपकम्
सामान्यार्घ्यं प्रकल्प्याथ यागवास्तुं हुनेच्छतम्  ७
पर्यग्निकरणं कृत्वा वेदिकादक्षिणे दिशि
पुनरर्घ्यं प्रविश्यञ्च मध्यं मध्यमकुम्भके  ८
शिवतत्वं समभ्यर्च्य आ++ द्याञ्च युग्मके
अभ्यर्च्य गन्धपुष्पञ्च ब्रह्मविष्णु हराधिपाः  ९
नैवेद्यं धूपदीपञ्च होमकर्मसमाचरेत्
अग्निकार्योक्तमार्गेण होमयेत्कुम्भयोजिषु  १०
प्रणवादिस्वनाम्ने चाऽऽत्मविद्या शिशन्तकम्
संप्रोक्ष्याभ्यर्च्य गन्धाद्यैः पञ्चगव्येन संयुतम्
दर्पणे खड्गं सुस्नाप्य पूजयेद्बिम्बवत्सदा  ११
गव्यं पञ्चामृतो +++ प्र नाडिका
पश्चात्तद्धोमयेत् किन्तु जानुकराठशिरोवधि  १२
संयोज्य धूपदीपञ्च षट्त्रिंशत्तत्वसंयुतम्
अजपेन सहोपेतं हंसरूपमनुं तथा  १३
सर्वत्र तत्वविद्यान्तं विन्यसेन्मूलमन्त्रवत्
ओं नमो भूतरूपाय मायाबीजेन संयुतम्  १४
धरणीबीजमाया च गजमूर्तिं नमः पदम्
हंसवाजि सहंसञ्चोच्चरेन्नामाभिः सह  १५

हकारं वृषभा ये च बिन्दु नादनमोन्तकम्
++++++++++++++++++++++ १६
+++++++ निर्घोषैः स्तोत्रमंगलवाचकैः
तत्र कुराडं समभ्यर्च्य पूर्ववदभिषेचयेत् १७
मन्त्रन्यासविधिं कृत्वा पृथ्वीपादञ्च विन्यसेत्
पतत्वं सर्वदेहेषु वह्निवायु नभे ध्वकम् १८
भावयेद्देशिको धीरः अपूपादिसमन्वितः
मुद्गमाषकुलुत्थञ्च चिम्बमाढकमेव च १९
++++++++++++++++++++
+++++++++++मारोप्य सर्वमङ्गलकारणम् २०
रक्षणार्थं भयं युद्धौ जयार्थेन समन्वितम्
राजराष्ट्रं विवर्धन्ते चराडयन्त्रमिति स्थितम् २१
तुराडलिङ्गेन सर्वत्र तुराडवाहन तुराडकम्
कञ्चुकं शिरःपादान्तं विन्यसेत्तु विचक्षणः २२

अश्वमासविधिः

भस्मपूजाविधिः प्रोक्तः अश्वमासविधिक्रमम्
अश्विनीमासतत्पर्व चन्द्रपक्षसमन्वितम् १
अन्यत्र शुक्लपक्षेण वर्जयेद्भूतिभू सदा
कपिलायामयं ग्राह्य पद्मपत्रे तु धारयेत् २
एला लवङ्गकञ्चोलं बिल्वपत्रौश्च मर्दनम्
तत्पिराडशुष्कसंयुक्तं नित्याग्निं वा सुदाहयेत् ३
शीतलेन व ++++ शोध्यं वा जलान्वितम्
पञ्चसप्तनवोपेतं क्षालयेच्छुद्धवारिणा ४
तद्भस्म रविबिम्बेन वस्त्रपूतेन भस्मना
शुद्धगड्डकं संग्राह्य वस्त्रपूतेन बन्धयेत् ५
संहिता मन्त्रसंयुक्तं केतकी बिल्की प्रसूः
अभिधानं सभस्मं वा कल्पयेद्भस्ममुत्तमम् ६
अन्यभस्म गृहीत्वा तु क्षालयेत्पञ्च सप्तभिः

कलामन्त्रहितं मन्त्रं +++++ ७
+++++++++ शिवलिङ्गार्चनं परम्
ज्ञानज्ञातृसमुद्भूतं ज्ञेय भस्मर्च्य त+++ वत् ८
तन्त्रमन्त्रसमारूढं कर्मज्ञेयं सदाशिवम्
षट्त्रिंशत्तत्वसंभूतं लिङ्गपीठादि ++++ ९
नियमं रुद्रभेदेन योगज्ञानसमन्वितम्
शिवभेदशिवं प्रोक्तं ज्ञेयं तन्त्रात्मनायके १०
क्रियाशरीरमित्युक्तं मन्त्रौ जवमिति स्मृतम्
क्रिया मन्त्र प्रयोगं हि +++ सान्निध्यमाचरेत् ११
प्रातः कालोदयात्पूर्वे +++++++
++++++ मूलमन्त्रेण संयुतम् १२
हृत्पुण्डरीकमध्यस्थे सौषुम्नेन पथाऽनलम्
द्वा +++ पदे योनि तत्तेजः पुञ्जपिङ्गलम् १३
आदिरादिसमृद्धस्थं आनदेशसमन्वितम्
स्वस्थमपिदीपिकानाडिं तन्मन्त्रं मध्यमस्थितम् १४
चिन्तयन्मनसे भाव्य निराधार ++++
यथेष्टं देवशवद्दम्यै शान्यां दिशिवर्जयेत् १५
उत्तरास्यो प्रभोदक्षे रजनीसंमुखस्थितम्
आचम्य पञ्चवत्सप्त मर्दनं मृदसंयुतम् १६
क ++++ णसप्तभिश्शो +++ कण्ठञ्चमूर्धनि
मन्त्रस्नानसुभस्मञ्च माहेन्द्रं +++ वामनुः
शुद्धवस्त्रेण संमृज्य शुद्धवस्त्रोत्तरीयकैः १७
तपभ्रंशञ्च तत्काले सन्ध्यावैदिकमर्पणम्
भस्मं वाम++ त्य दक्षहस्तोऽपि मन्त्रयेत् १८
भस्मसंभवतद्रूपं आत्मवद्वह्निमेव च
संहितेन नमस्कृत्य तत्रवदभिमन्त्रितम् १९
मूर्ध्नि चैव ललाटे तु हृदये गुह्यदेशके
जानुना +++ कण्ठे च प्रोक्षणं बहिरन्तयुक् २०
प्राणायामविधिं भाव्ये शिवं साक्षान्महामनुम्

करन्यासविधिं भाव्यमङ्गन्यासं न्यसेत्तथा २१
शिवगायत्रिमन्त्रेण त्रिधा ग्रर्घ्यमना सह
सं +++ सूर्यञ्च त्रिधा ग्रर्घ्य समर्पणम् २२
संहितेन पुनस्तर्प्य शिवेन वरया सदा
श्यामलां वाचसीत्यर्थ तर्पयेद्गुरुपादुकाम् २३
ग्रालयन्तु प्रदक्षिणयां क्षालये +++ लिषु
ग्राचम्य द्वारमाश्रित्य पूर्ववद्भस्म धारिणम् २४
कलशेन सुसंप्रोक्ष्य निरीक्षणादि चतुष्टयम्
ब्रह्मविष्णुहरादीनां मूलमध्यममग्रके २५
वलये च ककाभ्यर्च्य पू +++ क्षालितम्
प्रणवे सप्तधा मन्त्र्य धेनुमुद्रां प्रदर्शयेत् २६
द्वारमस्त्रेण संप्रोक्ष्य द्वारपालान् प्रपूजयेत्
गणपतिं त्रिधा भ्यर्च्य गङ्गां च यमुनां तथा २७
++++ महाकालमस्त्रद्वारेण मर्चितम्
पुष्पक्षेपान्तरिक्षेण भूमिष्ठांस्त्रिविधानिति २८
देवदक्षिणदिग्भागे सन्निविष्टसुखासने
भूतशुद्ध्यन्तरी कृत्वा पञ्च +++ न्वितम्
क्षालयेल्लिङ्गपीठञ्चार्चयेद्धारिकान्वितम् २९
ग्राधाराख्यमनन्तञ्च धर्माद्यञ्च चतुष्टयम्
शिवासनं मूर्तिहंसं विद्यादेहं न्यसेच्छिवम् ३०
शुद्ध ++++ बहुक्षो शुद्धवर्त्मनि
शिवं परात्परं सूक्ष्मं नित्यं सर्वगताव्ययम् ३१
ग्रनतीतमनौपम्यमप्रमेयन्त्वनामयम्
शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम् ३२
व्योमातीतन्तु सूक्ष्मत्वान्नित्यं कारणशून्यतः
ग्रशून्यमपरं शून्यं सर्वशून्यं सदा मनु ३३
बिन्दुरूपं पराशक्ति +++ मनस्य च
स्थूलविधं शून्यनित्यं +++ संहारकारणम् ३४
+++ लायुक्तं मन्त्राध्वा च पटादिषु

कामिकाद्यष्टविंशत्या तन्त्रमन्त्रसुस+++ ३५
काष्टे लोहे शिले स्त्रग्ये षट्त्रिंशत्तत्वसंयुतम्
शिवविद्यात्मतत्वञ्च षडध्वं मन्त्रं कल्पयेत् ३६
सहस्त्राक्षरमाद्यन्तं परादूर्ध्वं सदाशिवम्
नीराञ्जननिराधारं निष्क्रियारूपवर्जितम्
सौवर्णं यत्क्रिया भिन्नमेतत्तु शिवलक्षणम् ३७
अवर्णविग्रहं देवि +++ विग्रहवर्जितम्
वर्णविग्रहवेत्तारं नमामि स्तौमि संश्रये ३८
अहंतः प्राच्य तन्मन्त्रं त्रिशाखामनुसंमितम्
आवाह्य देव तत्रैव स्थापन +++ के ३९
रो ++++ द्यमाचम्याऽऽसनं मूर्तिमूलिषु
सहितेन समभ्यर्च्याऽवकुण्डनमेव च ४०
धेनुमुद्भवशूलञ्च नेत्रपञ्चममुद्रया
पाद्यं पादाम्बुजद्वन्दे वस्त्रेष्वाचमनीयकम् ४१
++ त्रिंशत्कलोपेतं विद्यादेहं पुनश्चितम्
संहिते गगने वक्त्रे बीजं शाखाप्रपञ्चकम् ४२
अनन्ता दिशिखण्ड्यन्तं वामादिनवशक्तयः
मण्डलत्रितयं पश्चात् दीपादिभिः शिवम् ४३
गव्य पञ्च ++ तोपेतं परार्धावत्सरामनुम्
अभिषिच्य विशेषार्घ्यं धौतवस्त्रेण वेष्टनम् ४४
भूषणैर्गन्धपुष्पं च दूर्वाक्षतसमन्वितम्
+++ ध्यानदेवेषु संहिता लयमर्चितम् ४५
पञ्चावरणमार्गेण मनसेन विभावयेत्
ज्ञानदीपमनो धूपं पञ्च मन्त्रेण पत्रकम् ४६
पुष्पवारि मनस्थञ्चाऽऽलयं भूतभावनम्
+++ समायुक्तं प्राणादीन्धूपदीपकैः
इत्येवं भावयेत्सर्वं +++ वनमुच्यते ४७
संक्रमे विषुवे चैव ग्रहणे राजजन्मयुक्
संक्रमेषु कलाप्रोक्तं +++ शताष्टकम् ४८

ग्रहणेन च कुम्भेषु स्नपनं त्रिविधं भवेत्
गव्य पञ्चामृतोपेतं सुस्नाप्यं मूलमूलिषु ४९
अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यं तु महाहविः
+++ ञ्च ताम्बूलं दर्पणं च्छत्रसंयुतम् ५०
चण्डेश्वरं समभ्यर्च्याऽऽचार्याय प्रदापयेत्
विशेषपूजाविधिः प्रोक्तः +++ पूजाविधिं शृणु ५१
इति सहस्रतन्त्रे क्रियापादे विशेषपूजाविधिपटलः

## शास्ताशान्तिविधिपटलः

शास्ताशान्तिक्रमं वक्ष्ये शृणुष्वैव महेश्वर
सर्वरोगहरं सौख्यौ सर्वकामार्थसाधनम् १
मार्ग्गकृष्णचतुर्द्दश्यां फल्गुने तु त्रयोदशी
चैत्रे चैत्रिकन्तत् ऋक्षे अमावास्यान्तमेव च २
पर्वयुक्तं तिथौ रात्र पर्व शशिनी सहः
कृष्णपक्षे शुभे प्रोक्तं शुक्लपक्षे तु कामदम् ३
उत्सवं सर्वरक्षार्थं राजाराष्ट्रं विवर्द्धनम्
राजरक्षाकरं पुण्यं ब्राह्मणं वैश्यशूद्रकम् ४
प्रार्थयेत् जातिरक्षार्थं ध्वजदण्डाधिवासयेत्
पक्षाहं राजरक्षार्थं नवाहं विश्वसृक्प्रियम् ५
सप्ताहं वैश्यमित्युक्तं शूद्रमष्टादशं भवेत्
जयदं कामदं मोक्षं इष्टसिद्धिश्चतुर्विधम् ६
नित्यमेकविधिं कल्प्य शक्रवारादि कल्पयेत्
असिते शक्रवारादि सिते चैव बुधः क्रमात् ७
शुद्धं शाक्तन्तथामिश्रं अमिश्रं युगधोचितम्
शुद्धशैवकरं श्रेष्ठं देवरक्षाकरं परम् ८
ग्रामशान्ति प्रजार्थौ तो यजमानाभिप्रार्थयेत्
कुलालं शाकमिश्रौ तु अखलं बलिपूजनम् ९
सर्वत्रस्याधिकारित्वात् ब्रह्माणपङ्कजैः
उत्सवं बहुधा प्रोक्तं निश्छित्येकं प्रकल्पयेत् १०

ग्रामशुद्धिपुराकृत्वा मृत्सङ्ग्रहणमेव वा
दीशापीठं प्रकर्तव्यं शास्ताशान्तिं प्रपूजयेत् ११
पर्यग्निकरणं सर्वे यागशालान् प्रतिष्ठयेत्
बेरप्रमाणवेदीनां पञ्चभूताहुतिस्थलम् १२
लाञ्जनं वेदिकोर्ध्वे तु चतुर्दिक्षु क्रमेण तु
पञ्चहस्तं ऋषिप्रोक्तं यागशालां प्रकल्पयेत् १३
मूलवेशकृतिस्सर्वे दी तर्थं कुण्डमानकम्
कल्पयेत् कल++त्तोपि दर्पणोदरसन्निभम् १४
मङ्गलाष्टयुधं प्रोक्तं तोरणं विन्यसेत्ततः
वेदिके शाकां कल्प्य साष्टद्रोणैश्च शालिभिः १५
पूर्वादिद्वारपालानां अष्टादशघटे न्यसेत्
वेदिकोर्ध्वे नवस्थानं कक्करी अश्विनी सहा १६
सकूर्च्चं सापिधानञ्च चूताश्वत्थदळेस्सह
नालिकेरं हिरण्यैश्च वस्त्रगन्धाक्षतादिषु १७
मङ्गलाङ्कुरसहप्रोक्तं पूजयेत् पूर्ववद्बुधः
पादशुद्धिं हृदा शुद्धिं करशुद्धिं तयात्मवत् १८
मन्त्रमूलं महाशास्ता विन्यस्य हृदयादिषु
मायादि मायया युक्तं स्वदेहं हरिहरात्मकम् १९
अकृतं विकृतं बाण प्राक्द्वारस्य देवता
कालन्नीलन्तथा दक्षे भूतयक्षञ्च वारुणे २०
जयञ्चैव मुखञ्चैव चतुद्वारस्य पालकाः
ब्रह्माविष्णुरुरिन्द्रादि अष्टादशघटाधिपाः २१
महाशास्तं महासीनं दमनी वर्णनी सह
मदनाभीषणा रौद्रा उन्मत्ताश्चोग्रभाषणैः २२
आचार्यं सौन्दरं वीरं परितः कलशार्चयेत्
देवनीलोत्पलाभासं पीतं शुक्र्यञ्च पार्श्वके २३
पीतं शुभ्रं तथा रक्तं कृष्णाभन्धूम्रवर्णकम्
तदालं अञ्जनं विदरं सौराभं भासरूपकम् २४
ऊर्ध्वकेशन्द्विहस्तञ्च आसीनं द्विनेत्रकम्

श्रीचराडं ऊरुहस्तञ्च सर्पकुराडलभूषितम्  २५
सर्वाभरणसंयुक्तं रक्तकञ्चुकभूषितम्
पूर्वादीशानपर्यन्तं स्पर्शनं परिमळासनम्  २६
देवईश्वरसंरूपं कलाकालान्तशक्तिभिः
दारकुम्भादिरावृत्यै नियति पादपङ्कजम्  २७
कर्म्मन्त्र्य हुतस्थञ्च ईश्वरान्तञ्च यागकम्
स्कत्य जप्वा हृति ध्यात्वा यागद्वारे तदग्रके  २८
विजीर्णा केसर्प्पञ्च कुराडलं उपवीतिनीम्
त्रिणेत्रं मन्दहसञ्च त्रिशूलं सर्षकं परम्  २९
यागोत्भूत कृति ध्यात्वा विकृताकृत मध्यमे
तदन्ते होमकर्मञ्च षर्प्पलं तिलसर्षपम्  ३०
मुद्गमाषघृतं लाजं अपूपं कदलीफलम्
चरुरिक्षु पलाशञ्च शास्ता प्रीति कुशेशयम्  ३१
ध्वजादिमवरोहान्तं बल्यन्तं तद्दिनान्तकम्
प्रथमं गणाधिपं ज्ञेयं द्वितीयन्द्वादशान्तकम्  ३२
तृतीयं पितामह प्रोक्तं चतुर्थं वनमालिकाः
पञ्चमं ईश्वरं प्रोक्तं षष्ठं सेनानिमेव च  ३३
सप्तमं भूतरात्री च प्रेतञ्चैव तथाष्टकम्
पैशाच नवत्री च ऋषीणां दशरात्रकम्  ३४
एकादशं तथारौद्रं द्वादशं वीरभद्रकम्
त्रयोदशं काळ्ये तु दुर्गारात्री चतुर्दशः  ३५
शास्तपर्वणिमावास्यां उत्सवं संप्रकल्पयेत्
प्रतिसरादि ध्वजान्ते तु पक्षाहं संप्रकल्पयेत्  ३६
द्वितीये तु तृतीये च ध्वजदराडे तु विन्यसेत्
पञ्चमे वसुमतिग्राह्य षष्ठे भेरीं समर्च्चयेत्  ३७
सप्तमे अङ्कुरं प्रोक्तं अष्टमेके तु रोगणम्
यागार्च्चनहुतारम्भं वास्तुशान्तिन्तकम्  ३८
दशमं बलिदातव्यं एकादस्यां परिभ्रमम्
द्वादशा नृत्तगीतञ्च वाहनादि त्रयोदशः  ३९

चतुर्दश्याधिकं शूलं बलिपात्रबलिन्ददेत्
पर्वस्नानाभृतं शूलं उत्सवं संप्रकल्पयेत् ४०
शास्ता देवार्चनं योगं बलिहोमवितानकम्
शास्ताभूतबलिनित्यन्नित्योत्सवं महोत्सवम् ४१
यात्राविशेषवाहादि कृष्णगन्धं निराजितम्
आरोहकर्ममवारोह्य कौतुकं तीर्थनमच ४२
षोडशं सर्वरक्षार्थं उत्सवं शास्तपूर्णवत्
पूर्णाहुति दशाप्रीति भूतो द्वादश बलिक्रमम् ४३
प्रत्येकं संहिता मन्त्रैः आकृति अर्चयेत् बुधः
आकृतिं आवणं ज्ञेयं कर्मं कूर्मासनस्थितम् ४४
मायारूपं महाशास्ता पूजास्मृत्वा क्रमं श्रुणु
प्रातस्नात्वा विधौम्मूलं स्मृत्वा पादुकपङ्कजम् ४५
आवृत्य गमनन्नद्यौ मलदन्तमनोदृढम्
शुचिस्मृत्वा जलस्नात्वा आकाशं मारुतं हविः ४६
जलं भूमिविशुद्धं स्यात् आज्ञामन्त्रं प्रकल्पयेत्
हरिहरं मूर्ध्नि विन्यस्य पुत्रलाभललाटके ४७
शकुना संहृदे न्यस्य मदकरीकुक्षिरेव च
पादद्वये महाशास्ता अङ्गुष्ठादि हृदान्वितम् ४८
नित्यस्य तर्पणं प्रातः द्वारस्थाने प्रवेशयेत्
पादप्रक्षालनं तत्वं तत्वेशीं हृदि मानसः ४९
भावयेत् अर्घ्यदानाग्रे प्रोक्षयेदस्त्रवारिणा
गणपति क्षिप्रमकृतं दक्षरक्षसुमर्च्चयेत् ५०
श्यामं रक्तं कराळस्य एकवक्त्रं सुदंष्ट्रणम्
ऊर्ध्वकेशं महारौद्रं कुडारं दण्डहस्तकम् ५१
अकृतं चिन्तयेत्पश्चात् रक्ताक्षिं च महोदरम्
कपालं शूलहस्तञ्च सर्वाभरणभूषितम् ५२
श्यामं गणेशनागस्य खड्गखेटकधारिणम्
दक्षिणे द्वारपालन्तु उत्तरे पार्श्वमेव च ५३
सरस्वति विकृतिं रक्षि तेषारूपं पृथक्पृथक्

शुक्लाभं भक्षमालाश्च द्विनेत्र दण्डहस्तकम्  ५४
भाषाङ्गी च मिति ध्यात्वा विकृतिं पीतवर्णकम्
महाकायं महारौद्रं दण्डहस्त कपालधृक्  ५५
रक्षी नीलोत्पलाभासं कवाटसूत्रन्त्रिशूलकम्
अर्चयेद्वामपार्श्वे तु द्वाराध्यक्षस्य मध्यवत्  ५६
बाडवानलसंप्रख्यं शूलं पाशकरद्वयम्
शयनं अनादूर्ध्वं गर्भकुक्षिं महोदरम्  ५७
घण्टा ताडनधूपाद्यै गर्भगेहं प्रवेशयेत्
स्वासनं मूर्तिमूलञ्च वक्त्राङ्गं अर्चयेन्मनुः  ५८
पञ्चखण्डं कलां ध्यात्वा धूपदीपं प्रदापयेत्
गव्यं कलामृतं नाळीजिनं गन्धतोयकम्  ५९
वेदादि हरिप्रिमाया मायाकन्दर्पं शुद्धमूलकम्
पञ्चवर्णात्मकं मन्त्रं मुच्चरेत् पञ्चखण्डकम्  ६०
वामे लक्ष्मी बीजञ्च दक्षिणे शुद्धमायया
पञ्चवर्णं पृथक् रूपं तेजो मण्डलमध्यगम्  ६१
त्रिणेत्रं शूलाभयमीशं गजारूर्ध्वं महाकृतिम्
हयरूर्ध्वं महारौद्रं मातुलङ्गा++ सूत्रकम्  ६२
अघोरन्त्रिशूलकपालं दक्षिणे तु विचिन्तयेत्
उत्तरे च श्रिया का ++ खट्गखेटकधारिणम्  ६३
सद्ये वराभयं पश्चात् विजीर्णकेशं महान्तकम्
वृषभं हंसतारिक्ष्यं पञ्चवक्त्रं निवेदयेत्  ६४
भैरवं यक्षिकाष्टञ्च लोकेशं वटुकेश्वरम्
क्षेत्रपालकनैवेद्यं यागेशं बलिहोमकम्  ६५
ध्वजाधिवासनं होमं सन्धिस्थाने तलस्थितम्
बेरं सह पदञ्चैव देवतावाहनं विधि  ६६
गणेशं षण्मुखं यागं पूर्वाद्यष्टदिशेषु च
द्वारत्रये स्मशाने च द्वाविंशत् बलिनिक्षिपेत्  ६७
पायसं दधिघृतं मिश्रं शुद्धान्नं शर्क्करैस्सह
कुक्कुटाण्ड प्रमाणे च कपित्थदळलाजकम्  ६८

होमसंस्कारपूतञ्च कूर्च्चापिधानवस्त्रकम्
स्रावाहयेत्ततोदेवं शास्त्रदृष्टेन कर्मणाः ६९
द्वात्रिंशत् सन्धिदेवे तु प्रीति पक्षविधिक्रमात्
पायसं दधिमिश्रन्तु घृतान्नफलमिश्रकम्
मधुमिश्रं गुळान्नञ्च लाजयुक्तं तिलान्नकम् ७०
हरिद्रान्नं गुरु प्रोक्तं शास्तविधि बलिं क्षिपेत्
कपित्थं बिल्वकुन्दञ्च करवीरं कुशेशयम् ७१
भल्वकं स्रामलाग्रञ्च तुळसी माधवी नवः
कपित्थ पलमात्रेण दापयेत्सन्धिदेवता ७२
स्रावाहयेत्ततेम्ब सघो जातेन मन्त्र ++ त्
स्थापनं पदमध्ये तु स्रर्घ्यमाचमनीयकम् ७३
पाद्यं प्रसून गन्धाद्यै धूपदीपं प्रदापयेत्
कुम्भश्रीकामरं गौडि समपादगुणेश्वरम् ७४
सिंहलीलान्तरीळी च वरादिमण्डलं गुहः
लळिते तरङ्गलीला च यिन्तळं भूतनृत्तकम् ७५
यागशाला प्रियं शास्तो पूर्वादि वचनान्वितम्
मेघरादी च ताळञ्च मलहरिकमलवर्त्तनम् ७६
टक्करी च वराडिभ्यां स्वब्धिकं कुञ्जरीनले
वामाली शुचिगगीतैरूर्ध्वपादन्तु दक्षिणे ७७
कन्दर्पं नैर्ऋते देशे गांबोधि सर्पमण्डलम्
रसलीलावराडी च भुजङ्गं वारुणे दिशि ७८
रसताळं वायुदिक् देशे भुजङ्गं त्रासमाधिला
प्रीतिताळसमोपादं नाड्ये चैवन्तथोत्तरे ७९
सिंहनादादिशाभूरि भूतमैशान्यदेशके
द्वाराग्रे जयतालन्तु भूपाळं पशाचनृत्तनम् ८०
तत्पूर्वे रविदण्डाग्रे महापीठं प्रकल्पयेत्
मलहरी मल्लताळञ्च भैरवं ताण्डवोदितम् ८१
महापीठमिति प्रोक्तं वटुकनाथं प्रपूजयेत्
लयताळं भैरवीगानं भूतनृत्तं विशेषतः ८२

पूर्वादिलोकपालाश्च स्वस्वपीठे समर्च्चयेत्
चर्चपुटं मेघरागञ्च वर्तनं मेघरागवत् ८३
ब्रह्मस्थाने रिभौ दण्डैः पाचयेदर्चनादिषु
गान्धारवेलया वल्लिरुत्खटदितं प्रोक्तं
++++++++++ वराडिनृत्तमङ्गलम् ८४
कौशिकं कुञ्जरी दण्डा म□यदक्षणे दिशिः
न□भाषा प्रियं लम्बु गौडीत्र स उञ्जरङ्गवत् ८५
श्रीकामारं सिंहनन्दं कुञ्जितं देशयागिरिः
तक्केशिजं पटे चैव गिरिराम इजान्वितम् ८६
तक्करागं पञ्चकारि माळवंगरिमेव च
पञ्चमं कुम्भताळैश्च देशया गिरिरेव च ८७
भ्रमरी भूतनृत्तञ्च ऐशान्यां प्रीतिरेव च
ध्वजारोहाद्यवरोहान्तं बलिदद्यात्स्वनामतः ८८
धूपदीपाक्षतादीनि भस्मताम्बूलमेव च
दिने साय रूपैस्तु सर्वघोषसमन्वितम् ८९
बलिन्दद्यात् निशादौ तु नृत्तगेय समन्वितम्
पदे पदे पदं गत्वा शास्तारूपस्वशक्तिषु ९०
चूर्णोत्स्वं महातीर्थं वितानस्थावरोहणम्
भूतो भूतो वसुभूतो कालमूर्तिहुदाकृतिः ९१
महोदरं मशीभातायं स्वस्वयुधशिरोध्वकम्
भैरवं शूलडमरुं मन्दहासं सुदंष्ट्रकम् ९२
लोकेशादिषु यक्षाद्यै खड्गकेटकहस्तयुक्
भावयेत् भक्तियुक्तेषु शुद्धशैवन्तु देशिकम् ९३
देशिकं देवताकारं तदेहं दमनिवर्णनि
शङ्कटाख्य बलिं कुर्यात् ध्वजमूलबलिं क्षिपेत् ९४
ग्रामप्रदक्षिणं कुर्यात् मौनोद्भूतं विसृक्जयेत्
सन्धिदेवान् विसृज्याथ निशान्तौ तु विशेषतः ९५
प्रतिसंवत्सरादीनि पूजाहोम बलिक्रमम्
यानधापुरिक्षेत्रं विपिनं वनतीरके ९६

सर्वशत्रु क्षयं शान्ति विजयं सर्वकामदम्
मोक्षदं रूपसमीपं उत्सवं भक्तिमाचरेत् ९७
शास्ता शान्तिरिति प्रोक्तं चरिडकोत्सवमुच्यते
चामुरडी च त्रयं साक्षात् ग्रामरक्षार्थकाररणम् ९८
भूतप्रेतपिशाचाद्यै गन्धर्वैः किन्नरादिषु
सिद्धविद्याधरैर्यक्षै मुनिभिस्तस्य नारदैः ९९
दिव्यन्तरिक्षभूमैश्च पाताळैद्देवतादिषु
प्रीरणयेत् शास्तकल्यारणं प्रतिरब्दोत्सवं क्रमात् १००
इति पूर्वसहस्रे प्रतिष्ठातन्त्रे क्रियापादे
शास्ताशान्तिविधिपटलस्समाप्तः

सहस्रागमे विशेषप्रायश्चित्तविधिपटलः

देवदास्यस्ततश्छाया यत् बेरे चोद्भवं यदि
कारयेदष्टगन्धञ्च भस्मलेपञ्च गव्यकम् १
पाद्याच्छाया समुत्पन्ने यत् बेरे कारयेत्सुधीः
अष्टगन्धञ्च गव्यञ्च स्नपनं भस्मलेपनम् २
इतरच्छाया समुत्पन्ने विशेषं शान्ति होमकम्
पक्षच्छाया समुत्पन्ने यद्बेरे कारयेत्सुधीः ३
अष्टगन्धञ्च गव्यञ्च स्नपनं भस्मलेपनम्
जिह्वान्तरन्तथामासमुत्पन्नं बेरपीठयोः ४
नवाहञ्चैव सप्ताहं पञ्चाहन्त्र्यहन्तु वा
गाश्च प्रवेशनं कृत्वा वसुगन्ध निलेपनम् ५
अनावर्त क्रमं शीघ्रं प्रायश्चित्तं समाचरेत्
प्राकारे गोपुरे चैव मनुष्यमैथुनोद्भवे ६
पुरयाहं पञ्चगव्यञ्च स्थानशुद्धिं समाचरेत्
मरटपे चैव सोपाने व्यञ्जने मरटपे गृहे
कररणं स्थानशुद्धिञ्च स्नपनं शान्तिहोमकम् ८
अष्टबन्ध विहीनञ्चेत् कृमिजन्तु समुद्भवम्
ततो मन्त्री विशेषेरण जलेनोष्ण जलेन वा ९

तद्घटं क्षाळयेत्कृत्वा सूक्ष्माधो दराडशोधनम्
अष्टबन्ध क्रमेणैव बन्धमे अष्टबन्धनम्  १०
चलाचलस्या चलस्यापि कामं यन्त्रविशेषतः
अयवोक्तं पुनर्वापि पिराडका बेरहेतवः  ११
पीठसङ्कटमेवञ्चेत् किञ्चित् भेदं समन्तकम्
कार्तारं सर्वकर्तारं ग्रामह्य विचारतः  १२
तदैव कृत्वा सङ्कोच निस्सङ्कटमथाचरेत्
पुनरावर्तमार्गेण प्रायश्चित्तं समाचरेत्  १३
अन्यप्राकारकर्तव्य राज्ञोध्वरसंहृतम्
शान्तिस्तदर्धं कर्तव्या तद्दोष विनिवृत्तयो  १४
जटिबनहीनञ्चेत् चलबेरस्य मन्त्रवित्
घटे तद्बेरमावाह्य बन्धयेत् जटिबन्धनम्  १५
कुशलैश्शिल्पिभिस्सार्धं कर्तभक्तिसमाचरेत्
अन्तरित्क्रमेनैव प्रायश्चित्तं समाचरेत्  १६
मराटपे चैव सोपाने भैक्षान्नं प्रति यः
स्थानशुद्धिं ततः कृत्वा स्नपनं कारयेत् बुधः  १७
व्यञ्जने मराटपे चेत्तु विशेषं शान्तिहोमकम्
गर्भे बेरे विशेषणञ्चेदन्तरीतक्रमं क्रमात्  १८
द्वितीये तृतीये चैके पुरायाह प्रोक्षणं कुरु
गोपुरेपि चतुर्थे चेत् सम्मार्जनानुलेपनम्  १९
बलिपीठे समावाह्य घटे चोत्पीठदेवतान्
पुनर्गळितगव्यञ्च तद्घटं अभिषेचयेत्  २०
जूटयं वा छिन्नवस्त्रञ्च सवेरोस्पर्शनं यदि
पुरायाहं पञ्चगव्यञ्च स्नपनं कारयेत् बुधः  २१
इति सहस्रागमे विशेषप्रायश्चित्तविधि पटलः

## विशेषप्रायश्चित्तविधिः

मराटपे चैव सोपाने मलभ्रमरोद्भवं यदि
पर्यग्निकरणं कृत्वा शिवस्य स्नपनञ्चरेत्  १

व्यञ्जने मण्टपे गर्भे मलभ्रमरोद्भवं यदि
सासनं शान्तिहोमञ्च पर्यग्निकरणं चरेत् २
यद्बेरे पतितं किन्तु सदेव यदिकारयेत्
करणञ्चाष्टगन्धञ्च स्नपनं शान्तिहोमकम् ३
दृश्यते चान्यभृङ्गार यत् बेरं यदि मन्त्रवित् ४
अष्टगन्धं समालिप्य स्नपनं कारयेत्सुधीः
पादनञ्चेत्तु तत्काले नैवेद्यनैव बुद्धिमान् ५
अनावर्तक्रमं कृत्वा चाष्टगन्धं समाचरेत्
दापनञ्चान्यभङ्गान्या नैवेद्ये नैव चेत् बुधः ६
स्नपनञ्चाष्टगन्धञ्च शान्तिहोमं समाचरेत् ७

इति सहस्रागमे विशेषप्रायश्चित्तपटलः

Reference:

*Sahasrāgama* manuscripts T0033, T0034a, T0103, T0162a, and T0918 from the Muktabodha on-line digital library, based on the paper transcripts of the French Institute of Indology at Pondicherry, India:

http://muktabodha.org/
http://muktalib5.org/digital_library.htm
http://muktalib7.org/IFP_ROOT/access_page.htm

| | |
|---|---|
| 1-172 | T0033 and T0103 (complete, presented in T0033's sequence) |
| 172-221 | T0034 *Sahasrāgama Aṣṭabandhanavidhi* (complete) |
| 221-231 | T0162 (excerpts) |
| 231-240 | T0918 (excerpts) |